ह्रीः

# दुर्लभबौद्ध ग्रन्थशोधपत्रिका

## 7

सम्पादक

प्रो० एस० रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक



भोटविद्या संस्थानम्

## दुर्लभ बौद्ध ग्रन्थ शोध योजना

केन्द्रीय उच्च तिब्बती शिक्षा संस्थान

सारनाथ, वाराणसी

बुद्धाब्द २५३३ बुद्ध पूर्णिमा ख्रीस्ताब्द १९८९

# Dhīḥ

## A Review of rare buddhist texts

## 7

*Editors*


PROF. SAMDHONG RINPOCHE
**Project Director**

PROF. VRAJVALLABH DWIVEDI
**Deputy Director**





भोट विद्या संस्थानम्

**RARE BUDDHIST TEXT PROJECT**
**Central Institute of Higher Tibetan Studies**
**SARNATH, VARANASI**

**B. E. 2533** **BUDDHA PŪRṆIMĀ** **C. E. 1989**

# धीः

## विषयानुक्रमणी



●

अस्माद् घोरतरादनन्तविषयाद् दुर्वारमारार्णवात्
संसाराद् यदि नो भवन्ति गुरवः पोतोपमास्तायिनः ।
तत् कस्मात् स्वविकल्पजालबहुलाद् व्यालाकुलाद् व्याकुलाः
प्राप्स्यन्त्यत्र परं सुखैकनिलयं बुद्धत्वमेते जनाः ।

योगिनी चिन्ता

# श्रीवज्रदेवीस्तोत्रम्

## आचार्यनागार्जुनविरचितम्

[ यह स्तोत्र डॉ० ठाकुरसेन नेगी से उपलब्ध हुआ है, जिसे उन्होंने नेपाल में एक व्यक्तिगत संग्रह से लिपिबद्ध किया था। ]

ॐनमः श्रीयोगिनीदेव्यै।

डाकी या सर्वबुद्धा सकलभयहरा व्यापिनी विश्वमाता
एकास्या रक्तवर्णा त्रिनयनमुदिता खेचरी श्रेष्ठशोभा।
प्रज्वाली दिव्यदेहा गगणकृतपदा द्विभुजा मुक्तकेशा
खट्वाङ्गं वामपाणौ दहिनकरतिकाधारिणी स्वर्गरूपा॥ 1 ॥

नग्नाङ्गा ग्रीवमाल्या नरशिरसहिता भूषणं पञ्चमुद्रा
सत्वानां मार्गमोक्षाऽनुत्तरवरदा ज्ञानसिद्धिप्रदाता (त्री)।
श्रीदेवी प्राणिरक्षाकृतजगतहिता योगिनी वज्रप्रभा
त्वत्पादौ पद्मरूपौ प्रणमितशिरसा नौमि विद्याधरीशा॥ 2 ॥

भगवती महादेवी भवत्याः शरणं व्रजे।
वन्दे पादाम्बुजे नित्यं भजामि त्वां प्रसीद मे॥ 3 ॥

जननी सर्वबुद्धानां त्वमेव बोधिदायिनी।
सर्वेषां बोधिसत्त्वानां माता हितानुपालिनी॥ 4 ॥

सर्वहितार्थसंभर्त्री सर्वपापविशोधिनी।
दुष्टमारगणान् क्षोभ्य महानन्दसुखप्रदा॥ 5 ॥

सद्धर्मसाधनोत्साहे बलवीर्यगुणप्रदा।
निःक्लेशस्तिमितध्यानसमाधिसुखदायिनी॥ 6 ॥

प्रज्ञागुणमहारत्नश्रीसमृद्धिप्रदायिनी।
भगवत्याः पदाम्भोजे शरणस्थो भजाम्यहम्॥ 7 ॥

नमामि वज्रवाराहीं सर्वपापप्रमोचनीम्।
मारविध्वंसिनीं देवीं बुद्धत्वफलदायिनीम्॥ 8 ॥

नौमि श्रीवज्रवाराहीं मन्त्रमूर्ति जिनेश्वरीम्।
अत्यन्तवरदां देवीं ऋद्धिसिद्धिवरप्रदाम् ॥ 9 ॥

वैरोचनकुलोद्भूतां मुक्तकेशीं त्रिलोचनाम्।
सन्ध्यासिन्दूरवर्णाभां वन्दे त्वां कुलिकेश्वरीम् ॥ 10 ॥

पञ्चमुद्रशिरःशोभां स्कन्धे खट्वाङ्गधारिणीम्।
करे वज्रकरोटस्थां वन्दे वज्रविलासिनीम् ॥ 11 ॥

मुद्रापञ्चधरां देहे मुण्डमालाविभूषिताम्।
लीलाहास्यमुखाम्भोजां वन्दे त्रैलोक्यसुन्दरीम् ॥ 12 ॥

भैरवाद्यां त्रिमुखीं च विक्रान्तकण्ठचर्चिकाम्।
विद्वेषघनघोरां च वन्दे भीमभयङ्करीम् ॥ 13 ॥

रागविरागयोर्मध्ये भावाऽभावविखण्डिताम्।
समुद्भूतां सदा देवीं वन्दे तां ज्ञानडाकिनीम् ॥ 14 ॥

पञ्चामृतसुरापानपञ्चशालिसुभोजिनीम् ।
गीतवाद्यरतां नित्यं वन्दे त्वां सुरवन्दिताम् ॥ 15 ॥

सदैव सहजानन्दां नित्यभूतां सर्वालयाम्।
रणच्चरणनूपुर्यां वन्दे नृत्यपरायणाम् ॥ 16 ॥

त्वां देवीं सिद्धिदात्रीं च योगाचारसदारताम्।
बुद्धनिर्वाणदात्रीं त्वां वन्दे बुद्धस्य मातरीम् ॥ 17 ॥

रक्ताङ्गीं वज्रवाराहीं दिव्यरूपस्वरूपिणीम्।
क्रान्तिमूर्तिदयादेवीं नमामि वज्रयोगिनीम् ॥ 18 ॥

बन्धूकपुष्पसङ्काशां शान्तरूपां जिनेश्वरीम्।
ऋद्धिसिद्धिप्रदां देवीं नमामि वज्रयोगिनीम् ॥ 19 ॥

द्वादशवर्षसम्पन्नां नवनृत्यस्वरूपिणीम्।
त्रैलोक्यव्यापिनीं देवीं नमामि वज्रयोगिनीम् ॥ 20 ॥

इति श्री मायाचक्रवज्रयोगिनीदेवीचरणकमले षट्शास्त्र-
श्रीनागार्जुनपादाचार्यविरचितं वज्रदेवीस्तोत्रम्

समाप्तम्

# धर्मगण्डीस्तवः

[ यह स्तव के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में स्थित 'बौद्धस्तोत्रसंग्रह' ( फोटो प्रति सं० 21535 ) स्तोत्राङ्क 106 से तथा 'धारिण्यादिसंग्रह' ग्रन्थाङ्क 370 से लिया गया है, 'स्तोत्रसंग्रह' का विवरण 'धीः' अंक 1 में तथा 'धारिण्यादिसंग्रह' का अंक 2 में दिया जा चुका है। धारिण्यादिसंग्रह में इसे मयूर कवि की कृति लिखा है ( द्रष्टव्य 'धीः' अंक 2, पृष्ठ 34 ), जब कि स्तोत्रसंग्रह में इसे शीलपारमिता की कृति माना गया है। ]

उच्चैः शैलाग्रदेशे प्रसव(प्रशम)सुखरसं भोक्तुमासीदधस्ताद्
दृष्ट्वा व्याघ्रीं बुभुक्षाक्षुभितसकलदिक्क्षामलोलाक्षियुग्माम्।
यः कारुण्यादमुष्यै निजतनुमददादात्ममन्त्रानुसिद्ध्यै
तस्य त्रैलोक्यबन्धोः स्मरबलजयिनो वाद्यते धर्मगण्डी ॥ 1 ॥

भूत्वा प्रौढाधिपत्यं शिबिजननृपतिः स्फीतदानाम्बुवर्षै-
रप्रीणाल्लोकमेकं परमकरुणया व्यापितान् सर्वकल्पान्।
याचन्ते(ते) चक्षुरेकं द्वयमपि कृपया योऽन्धविप्राय दत्त्वा
प्रासाद्यं प्राप तस्य त्रिभवभयकृतो वाद्यते धर्मगण्डी ॥ 2 ॥

आस्ते प्रत्येकबुद्धः स्वयमुपवसनो येन क्ष(क)ल्माषपिण्डं
सत्कृत्यापूज्य तं प्रागधमभृतकतां प्राप (प्य) तस्यां नगर्याम्।
राजाऽभूत् कोशलेशः कुशलपरिणतेरद्भुतायाश्च तस्या
इत्याश्चर्यं त्रिलोक्यां गदितुमिव मुनेर्वाद्यते धर्मगण्डी ॥ 3 ॥

दानाभ्यासप्रकर्षं कलयितुमखिलं श्रेष्ठिनो यस्य वित्तं
कृत्वा नाशक्यतैनं विरमयितुमितो दानधर्मात् सुरेशः।
तस्यैवाशेषसत्त्वव्यसनपरिभवं हर्तुमभ्युद्यतस्य
क्षीणक्लेशस्य शास्तुर्दशबलबलिनो वाद्यते धर्मगण्डी ॥ 4 ॥

भिक्षां भिक्षार्थिने यः स्वयमभिचलितो वीतरागाय दातुं
मध्ये निर्माय भीमं नरकमलिहितो देवपुत्रेण मासान्।
तस्यानादृत्य वाक्यं नरकजनलिनीसंक्रमेण प्रयातः
तस्येयं मारजेतुः सुरमनुजगुरोर्वाद्यते धर्मगण्डी ॥ 5 ॥

दत्तः शक्राय कायो शशकतनुभृतो विप्ररूपाय येन
क्षिप्त्वा क्षिप्रमवज्ञास्फुरितकररुचं विस्फुलिङ्गौघमध्ये ।
यस्येन्द्रोऽभिप्रसन्नः प्रकटयितुमिदं दानमाश्चर्यरूपं
चक्रे चन्द्रं शशाङ्कं तमनु मुनिवरं वाद्यते धर्मगण्डी ॥ 6 ॥

यो भूत्वाग्रे प्रभावी तृणमिव गृहजं स्फीतमुत्सृज्य सौख्यं
कारावीर्यं प्रशान्तं निरगमदिह वै शीर्णपर्णैस्तुतोष ।
कृत्वा तत्रापि यत्नं सकलमकलयद्यस्य संकोचमिन्द्रः
तस्येयं धैर्यराशेर्जितसकलकलेर्वाद्यते धर्मगण्डी ॥ 7 ॥

भूत्वा मैत्रीबलेन क्षितिपतिगुरुणा येन भृत्यार्थनाम्ना
भित्त्वा छित्त्वा स्वगात्रं स्वपिशितरुधिरैर्भोजिताः पोषिताश्च ।
ये यक्षाः पञ्च तेषु प्रथममभिहितं तत्त्वमार्गं जिनस्य
तस्यैकस्यानुकम्पाविमलजलनिधेर्वाद्यते धर्मगण्डी ॥ 8 ॥

पुत्रौ स्वप्राणतुल्यावभिनववपुषौ प्रेयसी चानुकूला
दुःखार्ताय द्विजाय प्रतिहततमसा सम्प्रदाय प्रहर्षात् ।
सम्यक् संबुद्धबोधौ प्रणिहितमचलं येन विश्वान्तरेण
क्षीणासङ्गस्य तस्य त्रिभवविजयिनो वाद्यते धर्मगण्डी ॥ 9 ॥

यज्ञारम्भच्छलेन त्वजनयदिमां घोषणां श्रावयित्वा
हन्तव्यः पापकारी नरपतिपुरुषैरन्ययज्ञो जनार्हः ।
इत्थं व्यावर्त्य पापाद् दशकुशलपथे योजयित्वा जनौघं
वृष्टिं योऽचीकरत् तं मुनिमनु मधुरा वाद्यते धर्मगण्डी ॥ 10 ॥

दैत्याजौ भग्नसैन्ये गृहमपसरता बिभ्रता शक्ररूपं
दृष्ट्वा संचूर्ण्यमानान् रथपथि पतितान् तार्क्ष्ययोनीन् कृपातः ।
व्यावर्त्यैकं रथेशं रणभुवि भवता जज्ञिरे येन दैत्याः
वक्तुं तस्यानुकम्पां त्रिजगति च जयं वाद्यते धर्मगण्डी ॥ 11 ॥

ज्ञातुं यस्य द्विजास्ते सुचरितविषयं धैर्यगाम्भीर्ययोगं
दारिद्र्यं स्वं विभाव्य क्षममनवगतास्ते च सूक्ष्मातिसूक्ष्माः ।
नोपाध्यायो विधाता परविभवकृतौ यं शशासाकलङ्कः
तस्येयं संनिषेद्धुः परधनहरणाद् वाद्यते धर्मगण्डी ॥ 12 ॥

यत् स्त्रीरत्नं यथार्थं समभवदखिलं लोकमुन्मादयच्च
तस्यामुत्पन्नरागोऽप्यवनिपतिरपि प्राप्ततारुण्यकोऽपि ।
यः स्वप्राणानधोक्षद्विरहजशिखिना नैव शीलं व्यमुञ्चत्
तं त्रातुं शीलराशिं प्रकटपटुरवा वाद्यते धर्मगण्डी ।। 13 ।।

यो यात्रासिद्धिहेतोः कथमपि वहनं स्वीयमारोपितोऽभूत्
दृष्ट्वा सांयात्रिकांस्तान्निरुपमजलधेर्मज्जतो वारिराशौ ।
वाचा शम्पामकार्षीत् पवनमशमयत् तानतैषीच्च कूलं
शास्तुस्तस्येयमुच्चैरवितथवचसो वाद्यते धर्मगण्डी ।। 14 ।।

मत्स्यत्वे बन्धुवर्जं सरसि रविकरैः शोषिते वर्तमानः
काकाद्यैः पक्षिसङ्घैः सरभसमभितो भक्षणायेक्षमाणम् ।
सत्याधिष्ठानतोयं सपदि सुरपतिर्वर्षयित्वाऽनुयासीत्
तस्य प्राणिप्रियस्य प्रशममयधियो वाद्यते धर्मगण्डी ।। 15 ।।

योऽग्निः पृथ्वीमतापीदभितपति पयोलिङ्गिकावांश्च तेजः
चक्रे वातं सहायं कवलयितुमिव व्योमवर्ती शिखाभिः ।
स व्याप्यावर्तकायं शिशुकमुपशमं संययौ सत्यवाच-
स्तस्य क्षन्तुर्विरन्तुरवितथवचसो वाद्यते धर्मगण्डी ।। 16 ।।

इन्द्रत्वे सर्वमित्रं नृपतिमभिमतं मद्यपाने सपौरं
दृष्ट्वा संन्यस्तकल्पो भृतघटममलं ब्रह्मणास्थापयद् यम् ।
योऽवादीन्मद्यदोषान् सपुरनृप........तारिणीं भाव्य तेषां
तस्येयं सर्वदोषव्यपनयनपटोर्वाद्यते धर्मगण्डी ।। 17 ।।

यः संभूय स्ववर्गे शमसुखनिरतः स्फीतमुत्सृज्य गेयं
प्रायाच्छान्तो वनान्तं पितृवदुपययौ तत्र(त्य)जे बन्धुरेकः ।
तेनोपच्छन्दमानाः स्वभुवनगतयो यान्त्यधो गेहदोषाः
तस्यानासक्तबुद्धेः प्रवरगृहसुखैर्वाद्यते धर्मगण्डी ।। 18 ।।

पित्रोः कालक्रियायां गृहसुखविमुखो यः प्रतस्थे वनान्तं
तस्मिन् प्रेक्षाप्रक्लृप्ते विषलवकवलैः कल्पयामास वृत्तिम् ।
धैर्यं तत्राधिगन्तुं सुरपतिरहरद्यस्य सप्ताहमंशं
व्योतुर्धीरस्य तस्यामृतरसमशितुं वाद्यते धर्मगण्डी ।। 19 ।।

राज्ञा संमानितोऽपि द्रविणपतिरपि स्वस्थकायोऽविताऽपि
स्निग्धज्ञातेयकोऽपि प्रथमवपुरपि श्रेष्ठभूतोऽपि लोके।
यः प्रव्रज्यामकार्षीदवितथगुणितो नापरैश्चोदितः सन्
प्रव्रज्यां तस्य कर्तुं सकलगुणकथां वाद्यते धर्मगण्डी ॥ 20 ॥

योऽत्याक्षीद् गेहवासं कथमपि कृपयैवोज्झितो नैकपत्न्या
अत्राप्यस्थादरण्ये प्रशमसुखरतस्तत्र केनापि राज्ञा।
ज्ञातुं साध्वीं तपस्यामपकृतदयितो निर्जघान प्रकोपं
धर्मं तस्याप्यवोचत् तमनु विजयिनो वाद्यते धर्मगण्डी ॥ 21 ॥

विश्वेषां मानसेऽभूत् सरसि च विमले राजहंसेषु राजा
प्राप्तुं पाशेन बद्धोऽप्यतिसुखसुमुखो ब्रह्मदत्तेन राज्ञा।
धर्मान् मायोपमांश्चित् त्रिजगदिव दृढास्तेन संक्लेशपाशा-
स्तस्येयं क्लेशपाशप्रतिहतिविदुषो वाद्यते धर्मगण्डी ॥ 22 ॥

स्नेहादेकस्य राज्ञो न्यवसदवसथे यः परिव्राजकः सन्
तस्यावज्ञामवेत्य स्वयमिह मुदितो शान्तमेकं वनान्तम्।
तत्राभिज्ञास्वभिक्षुः पुनरपि नृपतिं प्राप्य तद्दृष्टिजालात्
प्रालक्ष्मीं तस्य दृष्ट्वाऽऽमयहतिभिषजो वाद्यते धर्मगण्डी ॥ 23 ॥

आसीत् कुत्राप्यरण्ये विजितनरगुणः सद्गुणैर्वानरात्मा
तत्राद्राक्षीन्मनुष्यं तरुवरपतितं श्वभ्रमध्ये रुदन्तम्।
तं दृष्ट्वैवानुकम्पापरिगतहृदयो योनिमध्याज्जहार
त्रात ...... मुखेभ्यस्त्रिभवलयकृतो वाद्यते धर्मगण्डी ॥ 24 ॥

अश्वारूढो नृपो यं वरशरभमृगं हन्तुमाधावितः सन्
अश्वात् क्षेत्रे प्रपतितमपि तं यश्च मृत्योर्जहार।
तस्यामित्रेऽप्यपत्येऽप्यसुनि च सदृशीं कर्तुमेवानुकम्पां
सत्त्वानां सर्वदुःखक्षयनिपुणमतेर्वाद्यते धर्मगण्डी ॥ 25 ॥

यो नद्यां नीयमानं रुचिररुरुमृगं तारयित्वा मनुष्यं
मा वादीः क्वापि लोके मम वसतिमिमां प्रार्थयामास चैनम्।
तस्याख्यातुवरस्य क्षितिपतिपतिनो बाहुरेकः प्रकोष्ठात्
तस्य त्रातुस्त्रिरत्नं नृपमवतरितुं वाद्यते धर्मगण्डी ॥ 26 ॥

कावेर्य्यावासवृक्षाच्च्युतमरसफलं निम्नगां नीयमानं
लब्ध्वा राजा तदीयप्रभवमनुजतापीड्यमानान् स्वबन्धून् ।
शैलाग्रे स्वाङ्घ्रियुग्माहितसुदृढलतां सुक्रमेण प्रसार्य
स्वत्वं तत्याज खेदात्तमनुगुणमयं वाद्यते धर्मगण्डी ॥ 27 ॥

मिथ्यासङ्कल्पदोषस्खलितमतिगतौ कम्पमाने स्वगात्रे
क्रोधात् कृष्णासिना संप्रहरति नृपतौ भीषणे रक्तनेत्रे ।
भूतार्थक्षान्तिवादो जिनतनुमसृजत् सक्षमां वै कदाचित्
क्षन्तुं तस्यापकारं प्रतिहतमनसो वाद्यते धर्मगण्डी ॥ 28 ॥

ब्रह्मा भूत्वाङ्ग दीनान् नृपतिरकुशलान् नास्तिदृष्टिप्रसूया(ता)न्
व्योम्नि स्थित्वा पुरस्थान् सुविमलवचनैः साधयित्वा नृलोकम् ।
यः कारुण्यादद्राक्षीत् प्रतिहतसकलाज्ञानघोरान्धकारान्
तस्यासद्दृष्टिजालच्छिदुरमतिमतो वाद्यते धर्मगण्डी ॥ 29 ॥

स्त्रीणां निर्वासितानामतिगहनवने सप्त दृष्ट्वा शतानि
प्रोवाचोपत्यकायामृतवरकिरणा मासपाथेयवन्तः ।
घ्रातेत्युक्त्वाऽऽत्मदेहं व्यसृजदसितटाद् यो दयादुत्कलीन्द्रः
सम्यक्प्राणैः प्रियस्य व्यपगतरजसो वाद्यते धर्मगण्डी ॥ 30 ॥

रौद्रं योऽदीदनन्तं नररुधिरवसामांसमज्जाभिवृद्धं
सौदासं धर्मदण्डैरनुपमकरुणावीर्यसत्यप्रसूतैः ।
तस्योदग्रप्रणेतुः सुखहितविधये प्राणिनां दुःखहेतोः
दुःखाद्या(ना)वर्तनार्थं कृतभववसतेर्वाद्यते धर्मगण्डी ॥ 31 ॥

दृष्ट्वापि व्याधिजन्मप्रभृतिबहुभयोद्दीप्तवह्निस्फुलिङ्गा-
लिप्तासारोपमेयं त्रिजगतमखिलं जातसंवेगचित्तः ।
यस्त्यक्त्वा राजलक्ष्मीं तृणमिव महतीं रक्षितो यो गृहेऽपि
प्रायाच्छान्तं वनान्तं तमनु सुचरितं वाद्यते धर्मगण्डी ॥ 32 ॥

यः पुत्राणां शतेन प्रवरगुणशतेनैव संभूषितात्मा
पक्षी भूत्वाऽज(न्व)हार्षीन्मृगरिपुगलतो लग्नदीर्घास्थिखण्डम् ।
लब्धावज्ञोऽपि तस्माद् धृतमघमशितुनैव शक्तोऽद्य तस्मै
क्षान्तिक्षेत्रस्य तस्यामृतमयफलिनो वाद्यते धर्मगण्डी ॥ 33 ॥

नित्योपद्राव्यमाणो बहुविधविधिवद्दुष्टशाखामृगेण
क्षोभं नाशिश्रियद् यो वरमहिषवपुर्यक्ष संधुक्षितोऽपि ।
यश्चावोचत्तितिक्षां सकलगुणनिधिं मोक्षमार्गप्रधानां
तस्य क्षान्त्याकरस्य क्षितिवरबलिनो वाद्यते धर्मगण्डी ॥ 34 ॥

॥ इति श्रीशीलपारमिताविरचितो धर्मगण्डीस्तवः समाप्तः ॥

—: ⋆ :—

# दुर्लभ ग्रन्थ परिचय

— जनार्दन पाण्डेय —

[ 'धीः' के 6 अंकों में अब तक दो विशाल संग्रहों के अतिरिक्त ४५ ग्रन्थों का परिचय उक्त शीषक से दिया जा चुका है। प्रस्तुत अंक में निम्नांकित ग्रन्थों का परिचय दिया जा रहा है—

46. वज्रप्रदीपानाम हेवज्रसाधनटिप्पणी
47. चतुर्योगिनीनिर्देश तन्त्र
48. ज्वालावलीवज्रमाला तन्त्र
49. चतुष्पीठमहायोगिनी तन्त्र
50. योगाम्बर तन्त्र
51. निष्पन्नयोगाम्बर तन्त्र
52. कुरुकुल्लाकल्प
    क. चक्रसंवराभिसमय—महायोगीश्वर लूयीपाद
    ख. अमृतप्रभानाम साधनोपायिका—डोम्बी वज्रपाद
    ग. कुरुकुल्ला साधन
    घ. अरपचन साधन
53. वज्रसत्त्वतथागतकाय
54. ताराकल्प
55. चक्रसंवरप्रयोग
56. वज्रसत्त्वपाराजिका
57. लोकेश्वरपाराजिका
58. योगिनीजाल महातन्त्र
59. कल्पराज महातन्त्र
60. प्रज्ञावज्रावतारण योग ]

## 46. वज्रप्रदीपानाम हेवज्रसाधनटिप्पणी

**ग्रन्थ—वज्रप्रदीपा**

**ग्रन्थकार—पण्डिताचार्य सुरतपाद**

पत्र सं० —1-45, पंक्ति प्र० प०–15, अक्षर प्र० पं०–32
लिपि—देवनागरी। अपूर्ण।

**प्रारम्भ**

सिद्धिः। नमः श्रीहेवज्राय।

श्रीहेवज्रं प्रणम्यादौ निस्तरङ्गस्वरूपिणम्।
उत्पत्तिक्रममाश्रित्य विशुद्धिर्वक्ष्यते स्फुटम्॥

प्रथमं तावत् साधनसूत्रं निगद्यते—अथ पूजाचक्रं चतुर्ब्रह्मविहारः परमं सहजः स्वेष्टदेवः रक्षाचक्रं शून्यताधिमोक्षः श्मशानं कूटागारं हेतुमण्डलं द्रुतापत्तिः समुत्थानं न्यासः द्वेषात्मा उत्सङ्गो ज्ञानचक्रम् अभिषेको मुद्रणम् अमृतास्वादो जगत्कायं षडङ्गः प्रभासु(स्व)रः उत्थानं मन्त्रजापो बलितत्त्वं सूक्ष्मयोगो द्वितीयन्यासो विहरणं भोजनं चरणं शयनं पुनरपरमुत्थानम्। एतेन द्वात्रिंशत्साधनसूत्रं महापुरुषलक्षणं विशुद्धम्।

**अन्त**

श्रीमत्सरोरुहपादोद्देशसूत्रम् आदेशेन मयोक्तम्।
जालन्धरिरिति ख्यातेनार्षवचनमाश्रित्यातिगोपितम्॥
कृत्वा सुरतवज्रेण विशुद्धिक्रमटिप्पणीम्।
तेन भूयाज्जगत्सर्वं वज्रश्रीज्ञानपारगः॥

**पुष्पिका**

इत्यार्यसरोरुहपादविरचितश्रीहेवज्रसाधनस्य वज्रप्रदीपानाम टिप्पणीविशुद्धिः समाप्ता।

॥ ये धर्मा० ॥

कृतिरियं पण्डिताचार्यश्रीमत्सुरतपादानाम्।

**विवरण**

यह ग्रन्थ डॉ० ठाकुरसेन नेगी के संग्रह से उपलब्ध हुआ है, जिसकी उन्होंने नेपाल में एक व्यक्तिगत संग्रह से प्रतिलिपि की है। मूल प्रति में 17, 18, 19 ये 3 पत्र अलिखित होने से मध्यखंडित है। नेपाल राष्ट्रीय अभिलेखालय के सूचीपत्र भाग 7, खंड 3, पृष्ठ 149 पर भी नेवारी लिपि में लिखित इस ग्रन्थ का उल्लेख है।

**विषयनिर्देश**

यह सरोरुहवज्रपाद ( पद्मवज्र ? ) के हेवज्रसाधन पर सुरतपाद द्वारा रचित टिप्पणी है। पूरे हेवज्रसाधन की प्रक्रिया को इन्होंने 32 भागों में बाँटा है, जिसे साधनसूत्र नाम

दिया है। प्रत्येक भाग में क्या-क्या करना चाहिये, इसको विस्तार से इस टिप्पणी में समझाया है। संक्षेप में विषय प्रतिपादन इस प्रकार है—

1. पूजाचक्र—साधक को स्वयं साधना के योग्य बनना और पूजासामग्री एकत्र कर पूजा करना।
2. चतुर्ब्रह्मविहार—मैत्री, करुणा, मुदिता और उपेक्षा की भावना का प्रकार।
3. परम—इन्द्रकान्तमणिप्रभ हेरुकाक्षरचतुष्टय ज्ञानालोकवज्र समाधियोग से जगत् को सुखी करने की भावना।
4. सहज—सहजयोग की भावना द्वारा हेरुकचिन्तन का विधान।
5. स्वेष्टदेवता—त्रिसत्त्वात्मक सत्त्वबिम्बसमुद्गत मण्डलेश की भावना स्वेष्टदेव के रूप में करना।
6. रक्षाचक्र—विघ्नोपशमनार्थं रक्षाचक्र का उपदेश।
7. शून्यताधिमोक्ष—सर्वजगत् का रक्षाचक्र में, रक्षाचक्र का हृद्बीजरश्मि में, रश्मि का द्वेषवज्र में, द्वेषवज्र का ज्ञानसमय में और ज्ञानसमय का समाधिसमय में संहरण करके त्रैधातुक को निराभास रूप में देखना।
8. श्मशान—आठ महाश्मशानों का साङ्गोपाङ्ग निरूपण।
9. कूटागार—4 प्रकार के उपस्थान (स्मृत्यादि) द्वार, 4 प्रहाण तोरण, 4 ऋद्धिपादादि वेदी आदि कूटागार के सभी अंगों का विस्तृत विवरण देकर "अथ बोधिपाक्षिकधर्मभेदाः कथ्यन्ते आर्यसरोरुहपादप्रसादतः" कहकर रूपक द्वारा कूटागार के भव्य स्वरूप का निदर्शन।
10. हेतुमण्डल—कूटागार के अन्दर विश्वदल कमलकर्णिका में चतुर्मारों को आक्रान्त किये सूर्यमण्डल में षोडशविशुद्ध हेतु वज्रधर बिम्बनिष्पत्ति की भावना।
11. द्रुतापत्ति—महारागानुराग द्रुतापन्न होकर भगवान् की बीजरूप से अवस्थिति।
12. समुत्थान—योग समाधि और अनुयोग समाधि।
13. न्यास—अतियोग समाधि से स्कन्धधात्वायतन न्यास।
14. द्वेषात्मा—महायोग और रतिसुखपर्यन्त आदि योगसमाधि।
15. उत्सङ्ग—गन्धर्वसत्त्व प्रवेश से पूर्व मण्डलोत्सङ्गपर्यन्त से सर्वाकारताभिसम्बोधि।
16. ज्ञानचक्र—गौर्यादि का ज्ञानचक्र में आकर्षण, प्रवेशन, बन्धन, तोषण द्वारा प्रवेशपर्यन्त सर्वाकाराभिसम्बोधि।
17. अभिषेक—'अभिषिञ्चन्तु मां सर्वतथागताः' इस भावना से पञ्चविजय कलशों से अभिषेक।

18. मुद्रण—वज्रगीति से लोचना आदि द्वारा भगवान् की स्तुति पर्यन्त मूर्धाभिसम्बोधि का प्रकार।

19. अमृतास्वाद—पद्मभाजन में पञ्चामृत, पञ्चप्रदीप का निष्पादन, शोधन, शीतलीकरण, अमृतास्वादपूर्विकाभिसम्बोधि।

20. षडङ्ग—मण्डल माण्डलेय प्रतिस्फुरणयोग द्वारा विनेयों को स्वकाय में संहृत करके षडङ्ग की भावना मण्डलराजाग्री नाम समाधि।

21. जगत्कार्य—'यह स्वाधिष्ठान जगदर्थ है' इस प्रकार सहजपर्यन्त एकक्षणाभिसम्बोधि का विधान।

22. प्रभासुर—'जैसे प्राणी सहजावस्था में प्रवेश करते हैं, ऐसे ही भगवान् भी प्रभासु(स्व)र में प्रवेश करते हैं' इस प्रकार सहज से लेकर प्रभासु(स्व)र (परम योग) पर्यन्त धर्मकायाभिसम्बोधि का विस्तार से निरूपण।

23. उत्थान—सहज से प्रभासु(स्व)रपर्यन्त और पुनः प्रभासु(स्व)र से सहजपर्यन्त अनुलोम विलोम क्रम से उत्पत्तिक्रम की भावना ही उत्थान है, इसका चतुःसन्ध्याधिष्ठान क्रम से वर्णन।

24. मन्त्रजाप—दोलाजाप, पिण्डजाप, समयजाप और वज्रजाप की विधि तथा मोक्षपुरत्रय का त्रितत्त्व से चिन्तन।

25. बलितत्त्व—षडङ्ग से लेकर बलिपर्यन्त कर्मराजाग्री समाधि का विस्तृत वर्णन।

26. सूक्ष्मयोग—चित्तस्थिरीकरण की प्रक्रिया, सूक्ष्मयोग नामक समाधि का वर्णन।

27. द्वितीय न्यास—सिंहवद् विचरण का प्रकार।

28. विहरण—विश्व की वास्तविकता के ज्ञान से चित्तभ्रान्ति का निवारण कर यथेच्छ विहार करना।

30. चरण—योगी की चर्या का वर्णन।

31. शयन—शयन का विधान।

32. अपर उत्थान—दूसरे दिन की क्रिया का प्रारम्भ।

इस प्रकार साधन के प्रारम्भ से दूसरे दिन की क्रिया प्रारम्भ करने तक की प्रक्रिया के विषयों का निरूपण इसमें किया गया है।

इस टिप्पणी में ग्रन्थान्तरों के निम्नाङ्कित वाक्य उद्धृत हैं—

1. धूमेन ज्ञायते वह्निः सलिलं तु बलाकया।
निमित्तैर्ज्ञायते गोत्रं बोधिसत्त्वस्य धीमतः ॥ ( पत्र 2)

2. प्रथमं भावयेन्मृत्कं धर्मधात्वात्मकं बिन्दुः।
योगी तस्योपरि स्थित्वा हेरुकत्वं विभावयेत् ॥ ( पत्र 3 )

3. अष्टमे पटले चोक्तं भगवता—
आलिकालिसमायोगे वज्रसत्त्वस्य विष्टरः।
अक्षरोद्भवपिण्डस्य हूंफट्कारो न चेष्यते ॥ ( पत्र 4 )

4. यथोपदेशात् त्रिविधं स्वेष्टदैवतरूपकम्।
अष्टास्यादिमहाघोरं भावयेदीदृशं प्रभुम् ॥ ( पत्र 6 )

5. कायो मृत्युः क्लेशो देवपुत्रश्च।
एते चत्वारो माराः स्कन्धानां क्लेशकारकाः ॥ ( पत्र 17 )

6. काशः श्वासस्तथोन्मादः क्षयकुष्ठविचर्चिकाः।
प्लीहयक्ष्मस्वरूपाश्च गजाद्याः परिकीर्तिताः ॥ ( पत्र 22 )
( गजाद्याः = अष्टदोषाः। )

7. कायैश्वर्यं वागैश्वर्यं चित्तैश्वर्यं तथैव च।
ऋद्धिः सर्वगतैश्वर्यमिच्छाकर्ता गुणाष्टकम् ॥ ( पत्र 23 )

8. तथा च कुलपटले संभोगमित्युक्तम्—
देहस्थं च महाज्ञानं सर्वसंकल्पवर्जितम्।
व्यापकः सर्ववस्तूनां देहस्थोऽपि न देहजः ॥

तथा च—

आदर्शबिम्बे सकलाङ्गयुक्तं रूपं यथा स्वच्छतरं विभाति।
अशीत्यनुव्यञ्जनलक्षणाद्यो देहस्तथा वज्रधरः सदैव ॥ ( पत्र 36 )
आइ न अन्त न जाणहिं नउ भव नउ निव्वाण।
एहु सो परम महासुह नउ पर नउ अप्पाण ॥ ( पत्र 37 )

## 47. चतुर्योगिनीनिर्देशतन्त्र

**ग्रन्थ**—चतुर्योगिनीनिर्देशतन्त्र
**संख्या**—1-533
**पत्र सं०**—24-71, **पंक्ति प्र. प.**–7, **अक्षर प्र० पं०**–37
**आधार**—नेपाली कागज, **लिपि**-नेवारी
**अपूर्ण**—( आद्यन्त खण्डित )।

**प्रारम्भ** ( उपलब्ध 24 वें पत्र से )

लौकिकलोकोत्तरा सिद्धिः शीघ्रं भवति नान्यथा।
गह्वरवृक्षसंकीर्णं मण्डलं वर्तयेत् सदा॥
साधयेन्मन्त्रमविच्छिन्नमुपहृदयं सदा जपेत्।
ॐ ह्रीं ह ह हूँ हूँ फट्।

**अन्त** ( उपलब्ध अन्तिम 71वें पत्र से )

ॐ आं त्रां खं हूं लां मां यां तां वांकारेण तदधिष्ठितपञ्चामृतप्रदीपरूपेण निष्पाद्य वायुपूरितप्रज्वलिताग्नितापविलीनबीजाक्षरादिकमभिनवतानुवर्णरसरूपं पश्येत्। तस्योपरि पारदसदृशवर्णहूँभवोऽधोमुखामृतमयं श्वेतखट्वाङ्गं विलीनमवलोक्य तद्रसं से(सौ)मनसीभूतं पश्येत्। आलिकालिपरिणतान् ॐ आः हूःकारमुपर्युपरिस्थितान्। ततो मण्डलदेवताभिः....।

**पुष्पिका**

इति चतुर्योगिनीनिर्देशे चतुश्चक्रक्रमबोधिचित्तसंक्रमणपटल एकत्रिंशतिः।

**विवरण**

यह ग्रन्थ राष्ट्रीय अभिलेखालय काठमांडू से माइक्रोफिल्म रूप में के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में उपलब्ध है, जिसके आधार पर यह विवरण दिया जा रहा है। ग्रन्थ अपूर्ण है। प्रारम्भ के 23 पत्र नहीं हैं और अन्त में भी 31 वें पटल के बाद कुछ पंक्तियाँ हैं, आगे का अंश खण्डित है। केवल 21 पटल उपलब्ध हैं। यह निश्चित नहीं हो सका कि पूरे ग्रन्थ में कुल कितने पटल हैं।

**विषयनिर्देश**

ग्रन्थ महत्त्वपूर्ण प्रतीत होता है। प्राप्त अंश की पुष्पिकाओं से वर्णित विषयों का ज्ञान हो जाता है, जो इस प्रकार हैं—

| | |
|---|---|
| इति मन्त्रजापनियमनिर्देशपटल एकादशः | ( पत्र 26 ) |
| इति मन्त्रजापाक्षमालानिर्देशपटलो द्वादशः | ( पत्र 27 ) |
| इति हेरुकादिनिर्देशपटलस्त्रयोदशः | ( पत्र 30 ) |
| इति वज्रयोगिनीपूजाविधिनिर्देशपटलश्चतुर्दशः | ( पत्र 31 ) |
| इति पात्रलक्षणनिर्देशपटलः पञ्चदशः | ( पत्र 33 ) |
| इति पञ्चामृतसाधनविधिनिर्देशपटलः षोडशः | ( पत्र 34 ) |
| इति मण्डलसूत्रपातरक्षणनिर्देशपटलः सप्तदशः | ( पत्र 37 ) |
| इत्यभिषेकपटलोऽष्टादशः | ( पत्र 39 ) |

इसके बाद बलितत्त्व का वर्णन है।

## 48. ज्वालावलीवज्रमाला तन्त्र

**ग्रन्थ**—ज्वालावलीवज्रमाला तन्त्र
**संख्या**—13960 (फोटो प्रति)
**पत्र**—1-83, **पंक्ति प्र० प०**–7, **अक्षर प्र० पं०**–38
**लिपि**—प्राचीन देवनागरी, पूर्ण।

**प्रारम्भ**

ॐ नमः श्रीवज्रसत्त्वाय

परहितपरिकल्पं धर्मकायं यमाहुर्निरुपमसुखपात्रं चारु संभोगकायम्।
भुवनहितविधाता यः स निर्माणकायः स भवतु भगवान् वः श्रेयसे वज्रसत्त्वः॥
दर्पणप्रतिबिम्बेन मायादेहं च लक्षयेत्।
वर्णानिन्द्रायुधानेव व्यापित्वं वद किं नृणाम्॥

**अन्त**

नरात्ममण्डलयोगिनीविशुद्धिः कल्प्येति पूर्वोक्तविधानेन शून्यतानन्तरम् ॐ आः हूं फट स्वाहा। ॐ अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः स्वाहा।

### पुष्पिका

इति ज्वालावलीवज्रमालातन्त्रे नैरात्म्यासाधनकल्पतन्त्रराजः समाप्तः । ये धर्मा० ।

### विवरण

इस ग्रन्थ का विवरण गायकवाड़ ओरियण्टल रिसर्च इंस्टीट्यूट संग्रहालय की उपर्युक्त संख्यक फोटो प्रति से दिया जा रहा है। यह एक प्रकार से संग्रह ग्रन्थ है। प्रत्येक पटल में भिन्न-भिन्न साधन विविध ग्रन्थों से उद्धृत किये गये हैं। जो साधन जिस ग्रन्थ से उद्धृत किया गया है पुष्पिका में उसका नाम दिया है। बीच-बीच में कहीं-कहीं उन ग्रन्थकारों का नाम भी है। जैसे—

त्रिसमयराजस्य साधनेति । कृतिरियं कुमुदाचार्यपादानाम् ( पत्र 73 )
क्रतिरियमाचार्यरत्नाकरगुप्तपादानाम् ( पत्र 75 )
इति श्रीयोगिनीजालतन्त्रे अमृतप्रभासाधनकल्प इति ( पत्र 81 )

### विषयनिर्देश

इसकी विषयवस्तु प्रत्येक पटल की पुष्पिका से स्पष्ट है—

इति सर्वसंगतचक्रसंवेगव्यवस्थासमाधिरिति प्रथमः ( पत्र 11 )
इत्यार्यगुह्यवज्रविलासिनीसाधनपटलो द्वितीयः ( पत्र 22 )
इति पञ्चाकाराभिसंबोधिक्रमः ( पत्र 25 )
इत्यादियोगो नाम समाधिः स्वाभाविकश्च कायः ( पत्र 28 )
मण्डलराजाग्री नाम समाधिः ( पत्र 31)
इति कर्मराजाग्रीनाम समाधिः, नैसर्गिककायश्च । भगवतः
श्रीहेवज्रस्य भ्रमहरसाधनं समाप्तम्, पटलस्तृतीयः ( पत्र 32 )
आर्यमायाजालमहातन्त्रोद्धृतमण्डलगाथा समाप्ता, पटलश्चतुर्थः ( पत्र 36 )
इत्यार्यगुह्येन्द्रतिलकतन्त्रोद्धृतगीतप्रबोधनपटलः पञ्चमः ( पत्र 60 )
( इस गीतप्रबोधन पटल में 32 अपभ्रंश गाथाओं के प्रतीक देकर उनकी संस्कृत में व्याख्या की गई है। )
इति मञ्जुवज्रमण्डलसार्वकर्मिकपटलः षष्ठमः ( पत्र 61 )
इति ज्वालावलीवज्रमालातन्त्रे नैरातमासाधनकल्पतन्त्रराजसमाप्तम् ( पत्र 81 )

## 49. चतुष्पीठमहायोगिनी तन्त्र

ग्रन्थ—चतुष्पीठमहायोगिनी तन्त्र

**पत्र सं०—1–30, पंक्ति प्र० प०-10, अक्षर प्र० पं०—38**

**लिपि—देवनागरी। पूर्ण।**

**विवरण**

यह ग्रन्थ उपर्युक्त नाम से गा० ओ० रि० इ० बड़ौदा के संग्रहालय में है, किन्तु यह 'चतुष्पीठमण्डलोपायिका' तथा 'चतुर्विंशतिपीठतन्त्रम्' इन दोनों नामों से उपलब्ध ग्रन्थ से अभिन्न है, जिनका परिचय 'धीः' अंक 4, पृष्ठ 17-19 में दिया जा चुका है।

## 50. योगाम्बर तन्त्र

ग्रन्थ—योगाम्बर तन्त्र

संख्या—13284

**विवरण**

गा० ओ० रि० इ० बड़ौदा के संग्रहालय में उपर्युक्त नाम से उपलब्ध यह ग्रन्थ 'योगाम्बर विधि' ग्रन्थ से अभिन्न है, जिसका विवरण 'धीः' अंक 5, पृष्ठ 7-8 में दिया जा चुका है।

## 51. निष्पन्नयोगाम्बर तन्त्र

**ग्रन्थ—निष्पन्नयोगाम्बर तन्त्र**

**संख्या—13175 तथा 13280**

**विवरण**

गा० ओ० रि० इ० बड़ौदा के संग्रहालय में उपर्युक्त नाम से उपलब्ध ग्रन्थ 'निष्पन्न-योगावली' ग्रन्थ से अभिन्न है, जो वहीं से प्रकाशित है।

## 52. कुरुकुल्लाकल्प

सं०—5/232

पत्र सं०—1-18, पंक्ति प्र० प०—7, अक्षर प्र० पं०—44

आधार—नेपाली कागज, लिपि—नेवारी

**विवरण**

यह ग्रन्थ राष्ट्रीय अभिलेखालय काठमांडू से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में माइक्रोफिल्म रूप में आया है, जिसके आधार पर यह विवरण दिया जा रहा है। अभिलेखालय के सूचीपत्र भाग 1 पृष्ठ 110 मेंभी इसका उपर्युक्त विवरण दिया गया है,

किन्तु ग्रन्थ को देखने पर ज्ञात हुआ कि इसमें 4 ग्रन्थ हैं, जिनका परिचय नीचे दिया जा रहा है—

क. **ग्रन्थ**—चक्रसंवराभिसमय

**ग्रन्थकार**—महायोगीश्वर लूयीपाद

**पत्र सं०**—1–9, पूर्ण।

**प्रारम्भ**

नमः श्रीवज्रडाकाय

प्रथमं तावद्योगेश्वरेण चतुर्ब्रह्मविहारिणा भाव्यम्। ततः पञ्चस्कन्धहारमुत्पादयेत्। रूपस्कन्धो वैरोचनः, वेदनास्कन्धो वज्रसूर्यः, संज्ञास्कन्धः पद्मनर्तेश्वरः, संस्कारस्कन्धो वज्रनाभः, विज्ञानस्कन्धो वज्रसत्त्वः। सर्वतथागत एव श्रीहेरुकवज्रः। चक्षुषोर्मोहवज्रः, श्रोत्रयोर्द्वेषवज्रः, घ्राणे ईर्ष्याविज्रः, वक्त्रे रागवज्रः, स्पर्शे मासय( मात्सर्य )वज्रः, सर्वायतनस्थे स्वयंवज्रः। पृथिवीधातुः पातनी, अब्धातुर्मारणी, तेजोधातुराकर्षणी, वायुधातू रत्नेश्वरी, आकाशधातुः पद्मज्वालिनी। नवस्कन्धधात्वायतनेषु देवताविशुद्धिः।

**अन्त**

श्रीकारमद्वयज्ञानं हेति हेत्वादिशून्यता।
रुकारोपरतं व्यूहं क इति न क्वचित् स्थितम्॥
चित्तं विश्राम्यते योगी निर्वाणं नैव दर्शितम्।
त्रिकालेन्द्रयोगीनां श्रीहेरुकादिवीरयोगिनी॥
नानापुष्पकरव्यग्रा नानाध्वजपताकिनी।
नानातूर्यनिघोषैश्च नानागीतोपहारतः॥
मृत्युं नाम विकल्पोऽयं नीयते खेचरीपदे॥

**पुष्पिका**

श्रीचक्रसंवराभिसमयः समाप्तः।
कृतिरियं महायोगीश्वरलूयीपादानाम्।

**विषयनिर्देश**

इसमें चित्तचक्र, वाक्चक्र, कायचक्र और दशभूमियों का परिचय दिया गया है तथा उनके ज्ञान से परिपूत होकर साधना करने का विधान किया है।

ख. **ग्रन्थ**—अमृतप्रभानाम साधनोपायिका

**ग्रन्थकार**—डोम्बी वज्रपाद

**पत्र सं०**—4 (9-12), पूर्ण।

**विवरण**

यह ग्रन्थ गा० आ० सीरीज बड़ौदा से प्रकाशित साधनमाला ( पृष्ठ 443-449 ) में छप चुका है।

ग. **ग्रन्थ**—कुरुकुल्लासाधन

**पत्र सं०**—3 (13-15 ), पूर्ण।

**विवरण**

यह साधन भी साधनमाला ( पृ० 349-350 ) में प्रकाशित है।

घ. **ग्रन्थ—**अरपचनसाधन

**पत्र सं०**—2 ( 15-16 ), पूर्ण।

**विवरण**

यह साधन भी साधनमाला ( पृ० 112-115 ) में प्रकाशित है।

## 53. वज्रसत्त्वतथागतकाय

**ग्रन्थ**—वज्रसत्त्वतथागतकाय

**संख्या**—इ० 13114

**पत्र सं०**—7, **पंक्ति प्र० प०**–6, **अक्षर प्र० पं०**–28

**आधार**—नेपाली कागज, **लिपि**–नेवारी, पूर्ण।

**प्रारम्भ**

ॐ नमः श्रीवज्रसत्त्वाय। वज्रसत्त्व उवाच।

[ इसके आगे प्रथम पत्र का पाठ फोटो कापी में पढ़ा नहीं जा सकता ] ( पत्र 2— ) रत्नसंभव, पच्छिमस्य अमिताभ, वायव्यस्य अमोघसिद्धि, वैरोचन महाजाति शुक्लवर्ण महोज्ज्वल स्वेतपीतरक्तस्याम चतुर्वक्त्र भवन्तु ह ॥ ६ ॥

**अन्त**

श्रीविध श्री। ककुप्छन्द। कनकशिखि। विश्वभव। काश्यप श्रीशाक्यसिंह वन्दे सप्ततथागत, ततो देवो नाममात्र कायव्याप्त मनो भावयेत्। कल्याणं च वज्रसत्त्वकम्। वज्रस्वभाव वज्राचार्यधर। शुभ ॥ ६३ ॥ सर्वरोग सर्वव्याधि सर्वकष्टं च नासनम्। धनपुत्रभार्या सर्वत्र परिपूरयेत् ॥

**पुष्पिका**

इति श्रीवज्रसत्त्वकायस्य तथागतजातो व्याप्तशतं समाप्तम्।

**विवरण**

यह ग्रन्थ आशाकाजी सफू संग्रह काठमांडू से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में माइक्रोफिल्म रूप में आया है, जिसके आधार पर यह विवरण दिया गया है।

**विषयनिर्देश**

इसमें वज्रसत्त्व तथा प्रज्ञापारमिता के संवाद के रूप में तथागत के वैरोचनादि विभिन्न स्वरूपों का साङ्गोपाङ्ग विवेचन किया गया है।

## 54. ताराकल्प

**ग्रन्थ**—ताराकल्प
**संख्या**—3-669
**पत्र संख्या**—1-20, **पंक्ति प्र० प०**–8, **अक्षर प्र० पं०**–40
**आधार**—नेपाली कागज, **लिपि**–नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ नमस्तारायै

नष्टं गतेऽन्तर्हिते च तन्त्रे तारोद्भवे योगमहासमुद्रे।
तारार्णवो नाम महाधिग्रन्थो नष्टे च तस्मिन् पु[न]रेष कल्पः॥
उद्धृते(त्य) तन्त्रेषु·········चविष्ठ(वरिष्ठ) योगान् बहुसत्त्वहेतोः।
लोकेश्वरः कल्पमिदं बभाषे शृण्वन्तु सर्वे किल बोधिसत्त्वाः॥

**अन्त**

एवं मोचनार्थाः पर्षन्मध्यस्थिताश्च ये सत्त्वाः पोतलके नगरके ते सर्वे ये परदुःखदुःखिता भगवान् तत्रास्ति संपन्नबुद्धभूताः सत्त्वार्थकारिणो नियतम्। इदमवोचद् भगवानार्यावलोकितेश्वरभाषितं प्रत्यभिननन्दुमि(रि)ति।

**पुष्पिका**

श्रीभगवत्यार्यताराकल्पे कुरुकुल्लाकल्पोऽष्टमः॥ समाप्तम्॥

**विवरण**

यह ग्रन्थ राष्ट्रीय अभिलेखालय काठमांडू से माइक्रोफिल्म रूप में के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में आया है, जिसके आधार पर यह विवरण दिया गया है।

**विषयनिर्देश**

इस ग्रन्थ का नाम 'ताराकल्प' है, किन्तु विषयवस्तु पूरे ग्रन्थ में कुरुकुल्ला से संबद्ध है।

अन्तिम पुष्पिका से प्रतीत होता है कि 'ताराकल्प' कोई बड़ा ग्रन्थ है और यह उसका कुरुकुल्ला सम्बन्धी एक अंश है। प्रस्तुत ग्रन्थ में आठ कल्प हैं, जिनके विषय अवान्तर पुष्पिकाओं से स्पष्ट हैं—

कुरुकुल्लावतारणकल्पः प्रथमः (पत्र 3)
कुरुकुल्लाभिसमयकल्पो द्वितीयः (पत्र 6)
कुरुकुल्लाया बोधिचित्तकल्पस्तृतीयः (पत्र 7)
कुरुकुल्लायाश्चतुर्थः कल्पः (पत्र 10)

(इस कल्प में वश्यविधि, विषनाशनतन्त्र, विशुद्धितन्त्र, स्त्रीसौभाग्यकरण आदि प्रयोग हैं।)

कुरुकुल्लामण्डलकल्पः पञ्चमः (पत्र 13)
कुरुकुल्लानिदानकल्पः षष्ठः (पत्र 14)
कुरुकुल्लारसायनतन्त्रकल्पः सप्तमः (पत्र 15)
श्रीभगवत्यार्यतारायाः कुरुकुल्लाकल्पोऽष्टमः (पत्र 19)।

17 वें पत्र के बाद किसी अन्य लिपिक का लेख है, जो अत्यन्त अशुद्ध है।

## 55. चक्रसंवरप्रयोग

**ग्रन्थ**—चक्रसंवरप्रयोग
**संख्या**—5/266
**पत्र सं०**—1–19, **पंक्ति प्र० प०**-6, 5, **अक्षर प्र० पं०**-32
**आधार**—नेपाली कागज, **लिपि**-नेवारी, अपूर्ण।

**प्रारम्भ**

ॐ नमः श्रीचक्रसंवराय, समभिव्याहरन्तु मां बुद्धा अशेषादिषु म·····। ॐ नमः श्रीचक्रसंवराय।
योगामृतैकरसपानविशुद्धचित्तं पीठादिदेशगमनेन विशुद्धदेहम्।
श्रीपीठमध्यवरमण्डलचक्रनाथं वन्दे सदा गुरुवरं जिनशासनेन॥
अथेत्यादि महावज्रं यस्यास्तन्तुसमाश्रितम्।
वन्दे तां वज्रवाराहीं चक्रसंवरनाथिकाम्॥
देव्यावलीभूषितदेहरत्नां वीरेशदा (वीरैः सदा) राजितसर्वगात्राम्।
चक्रस्थनाथां सहजामलां च वन्दे सदा संवरयोगसाराम्॥

**अन्त**

त्रिधातुस्वभावं सुरूपं विरूपं होताशेषरूपं चतुर्ब्रह्मविहारान्तेवासिकं लक्षशालं वृतं व्यञ्जनैः संस्कृतं धर्मसंभोगनिर्माणकायत्रयव्याप्तसत्त्वार्थकृत्यस्थितं ॐ त्रितत्त्वं महारागं

रक्तं महाद्वेषदुष्टं महामोहमुग्धं महालोभलुब्धं कृपाशून्यताभिन्नपूर्वापरान्तद्वयत्यक्तलोक-त्रयैकक्षणव्यापिविज्ञानमाविर्भवेत् श्रीमहानन्दसंदोहः सत्सुन्दरं दानशीलादिसं·····।

**पुष्पिका**

नहीं है।

**विवरण**

यह राष्ट्रीय अभिलेखालय नेपाल से माइक्रोफिल्म रूप में के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में आया है। इसी के आधार पर उक्त विवरण तैयार किया गया है।

**विषयनिर्देश**

यह बौद्ध कर्मकाण्डविषयक ग्रन्थ है। इसमें चक्रसंवरसाधना की पद्धति बताई गई है, जैसा कि नाम से ही स्पष्ट है। ग्रन्थ अपूर्ण है। पुष्पिका नहीं है। 19 वें पत्र में आधे में ही लेख रोक दिया गया है। इससे अगले पत्र की जो फोटो प्रति है, उसमें 4 लाइन इस प्रकार हैं—

"ॐ नमः श्रीचक्रसंवराय । श्रीसंवरविधिमाह। शून्यतानिमित्ताऽप्रतिहिताऽनभिसंस्थाना चतुर्विमोक्षविद्या चतुर्मुखः । सम्यक्कालत्रयदर्शनात् त्रिनेत्रः। द्वादशाङ्गप्रतीत्यसमुत्पाद-निरोधाद् द्वादशभुजः। जगच्छून्यतया आलीढत्वाद् आलीढासनः। शून्यताकरुणयो-रेकरसीवस्तुज्ञानात्मके दक्षिणकरे वज्रः। प्रज्ञापारमिता घण्टा। जगन्मोहविनाशात्·····"

## 56. वज्रसत्त्वपाराजिका

**ग्रन्थ**—वज्रसत्त्वपाराजिका ( नेवारी भाषाटीका सहित )

**संख्या**—3-290

**पत्र सं०**—1-26, **पंक्ति प्र० प०**-7, **अक्षर प्र० पं०**-53

**आधार**—नेपाली कागज, **लिपि**—नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ नमः श्रीवज्रसत्त्वाय। ॐ नमः सर्वज्ञाय।
वज्रसत्त्वं नमस्कृत्य जगत्त्राणं महाकृपम्।
प्रायश्चित्तविधिं वक्ष्ये शौचाचारं च सुव्रतम्॥ 1 ॥
आचार्यः परमो देवः पूजनीयः प्रयत्नतः।
स्वयं वज्रधरो राजा साक्षाद्रूपेण संस्थितः॥ 2 ॥
प्राणिवधप्रायश्चित्तं तावत्कथ्यते। तत्र वज्राचार्यो व्रतीनां ब्राह्मणादि-वर्णानां च वधस्य महापातकत्वात् तथा विधय उच्यन्ते।

**अन्त**

अहोरात्रोषितः स्नातः प्राङ्मुखस्तत्समं पिबेत्।
पञ्चगव्यं सकृत् पीत्वा सन्मन्त्राधिष्ठितं शुभम् ॥ 26 ॥
सर्वपापविनिर्मुक्तः शुद्धो भवति मानवः ॥ 27 ॥

**पुष्पिका**

नानाशास्त्रसुसारः स्वल्पः प्रायश्चित्तशौचाचारविधिः समाप्तः।

अब्दे नेत्रशून्यव्योमकसंख्यैः (1002) लेख्यं पूर्णम्। वज्रसत्त्वाभिधासौ पाराजिकाख्या सिते भाद्रपक्षे श्रीमान् वज्राचार्यवज्रधरेण।

**विवरण**

राष्ट्रीय अभिलेखालय काठमांडू से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में प्राप्त माइक्रोफिल्म प्रति से यह विवरण दिया गया है।

**विषयनिर्देश**

यह बौद्ध धर्मशास्त्र विषय का ग्रन्थ है। इसमें विभिन्न प्रकार के पापों के प्रायश्चित्त का विधान है। पापों को दो प्रकार का माना है—स्वयंकृतोऽनिमित्तश्चेति—अर्थात् जानबूझ कर किया हुआ और अनजान में या संसर्गवशात् हुआ। इसलिए इनके अलग-अलग प्रायश्चित्त बताये गये हैं। इसमें 5 प्रकरण हैं, जिनकी पुष्पिकाएं इस प्रकार हैं—

1. प्रायश्चित्तशौचाचारविधौ प्रायश्चित्तोदयप्रकरणम्। (पत्र 8)
   (इसमें सामान्य प्राणिवध का प्रायश्चित्त है)
2. प्रायश्चित्तशौचाचारविधौ गोवधप्रायश्चित्तं द्वितीयप्रकरणम्। (पत्र 10)
3. इति अगम्यागमन-अभक्ष्यभक्षणप्रायश्चित्तं समाप्तम्। (पत्र 15)
4. इति प्रायश्चित्तशौचाचारविधौ शौचाशौचचतुर्थप्रकरणं समाप्तम्। (पत्र 22)
5. इति प्रायश्चित्तविधौ शौचाचारे श्राद्धप्रकरणं समाप्तम्। (पत्र 25)

## 57. लोकेश्वरपाराजिका

**ग्रन्थ**—लोकेश्वरपाराजिका
**संख्या**—4/1031
**पत्र सं०**—1-16, **पंक्ति प्र० प०**–7, **अक्षर प्र० पं०**–32।
**आधार**—नेपाली कागज, लिपि–नेवारी, पूर्ण।

**प्रारम्भ**

नमः सिद्धिसाधनाय
विहरत्पोतलके रम्ये तारादेवीसमायुतम्।

देवाभिपर्षदं कृत्वा नराणां हितकाम्यया ॥
अथैनं च समालोक्य कारुण्यं मध्यमण्डले ।
ततो दृष्टमहोत्पातं पापानामुद्यते क्षणे ॥
तद्दृष्ट्वा दुःखसङ्क्लिष्टं कारुण्येन विसिस्मिते ।
चित्तेऽतिदिग्धे संजाते तारादेवीमपृच्छत ॥

**अन्त**

यस्याग्रे वने क्षेत्रे उद्याने वा काकेनाण्डजपातदृष्टेन परचक्रभयं शान्तिपूजनं महावल्यर्चनं पञ्चरक्षापाठनं हिरण्यदानं च ॥ 62 ॥ अन्यविधिना उपजायते सर्वेषां शान्तिदानरूप्य-षडंशेन यजमानस्य निरूपं कृत्वा देवाय विप्राय भिक्षुराचार्याय वा सुवर्णदक्षिणां दद्याद् भोज्यं च । शान्तिः ॥ 63 ॥

**पुष्पिका**

इत्युत्पातलक्षणशान्तिविधिः समाप्तः ॥

**विवरण**

यह राष्ट्रीय अभिलेखालय नेपाल से माइक्रोफिल्म रूप में के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में प्राप्त है। उसी के आधार पर विवरण दिया गया है।

**विषयनिर्देश**

यह भी बौद्ध धर्मशास्त्र का ग्रन्थ है। इसमें विविध प्रकार के अनिष्टकारी उत्पातों की शान्तियाँ बताई गई हैं।

## 58. योगिनीजालमहातन्त्र

**ग्रन्थ**—योगिनीजालमहातन्त्र
**संख्या**—M B B 1-21
**पत्र संख्या**—1-43, पंक्ति प्र० प०–9, अक्षर प्र० पं०–53
**आधार**—नेपाली कागज, लिपि–देवनागरी, पूर्ण।

**प्रारम्भ**

ॐ नमः श्रीवज्रयोगिन्यै

या श्रीर्वज्रविरा(ला)सिनी भगवती संभोगभङ्ग्याद्भुतं
नित्यानन्दमहोत्सवं वितनुते बिम्बौजपीताङ्गका।
सत्त्वानां तथतेव विग्रहवती बाला च रम्योज्ज्वला
तस्याः पादयुगं जगज्जयकरं वन्देऽभिवन्द्योत्तमम् ॥

भगवती(ति) दिगम्बरा(रे) मुक्तकेशार्ध(र्द्धं)पादे
दिनकरकरभासे मुण्डिते मण्डिताङ्गे।
निखिलभवनिहन्ता(न्त्री) सिद्धिसंबोधिदात्री
प्रणमितजिनमाता योगिनीजालतन्त्रे ॥

### अन्त

इदं तन्त्रं प्रभूतं च न भूतो न भविष्यति।
वज्रवाराहिकल्पेदं स्थूलं चाल्पं च भाषिता (तम्) ॥
मेरुरज:प्रमाणं च सर्व····ह सुभाषितम्।

इदमवोचद् भगवानात्तमनाः—

अनन्ताः पर्यन्ताश्चैव कलिकाले तु भवान्तरे।
शाक्यसिंहेन तन्त्रे चेत् कथिता योगधारणा॥
श्रोतारं स्वयमे शास्ता वक्तारं च परे जने।
सुभाषितं भाष्यमाणं तन्मयश्च मतिर्भवेत्॥
मया भीमा गतिः प्राप्ता संगीतिकारकादिभिः।
भगवतो भाषितं च अभ्यनन्दमिदं वचः॥
सुगत्या गच्छन्ति जपैस्तु भवस्यास्य समानता॥

### पुष्पिका

इति योगिनीजालमहातन्त्रराजे योगज्ञानवज्रवाराह्यादियोगिनी-क्रियातत्त्वार्णवाशोति-
योगिनीजालतन्त्रराजः समाप्तः ॥

### विवरण

इस ग्रन्थ की माइक्रोफिश प्रति इंडियन एडवांस स्टडी फार वर्ल्ड रिलीजन न्यूयार्क से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में आई है, जिसके आधार पर यह विवरण दिया जा रहा है। इसकी एक प्रति राष्ट्रीय अभिलेखालय नेपाल ( सं० ३–६६७ ) तथा गा० ओ० संग्रहालय बड़ौदा ( सं० १३२५३ ) में भी है।

### विषयनिर्देश

यह अत्यन्त महत्त्वपूर्ण ग्रन्थ है और इसके वचन प्रायः प्रसिद्ध ग्रन्थकारों ने अपने ग्रन्थों में उद्धृत किये हैं। इसमें २६ पटल हैं। प्रत्येक पटल की अवान्तर पुष्पिका में उसका विषय-निर्देश इस प्रकार है—

इति योगिनीजालमहातन्त्रे वज्रयोगिनी-उत्पत्तिपटलः प्रथमः ।
" " वज्रवाराही-उत्पत्तिपटलो द्वितीयः ।
" " चक्रोत्पत्तिपटलस्तृतीयः ।
" " वज्रवाराहीसमयचक्रपटलश्चतुर्थः ।
" " सृष्टिकारकयोगिनीचक्रपटलः पञ्चमः ।
" " चन्द्रसूर्ययोरुत्पत्तिचक्रपटलः षष्ठमः ।
" " ज्ञानचक्रप्रयोगपटलः सप्तमः ।
" " यन्त्रचक्रादिमण्डलपटलोऽष्टमः ।
" " सुखसञ्चारोत्पत्तिलक्षणपटलो नवमः ।
" " योगिनीक्रमतत्त्वविधिपटलो दशमः ।
" " योगिन्युत्पत्तिलक्षणपटल एकादशमः ।
" " श्रीसवरचक्रस्वभावलक्षणपटलो द्वादशमः ।
" " कर्मप्रसरोनाम पटलस्त्रयोदशमः ।
" " हें ह्लोमोत्पत्तिकर्मपटलश्चतुर्दशः ।
" " ह्रीं संचारिणीपटलः पञ्चदशः ।
" " हूः हूः संचारिणीलक्षणविधिपटलः षोडशः ।
" " जपाक्षमालाप्राणोत्पत्तिलक्षणपटलः सप्तदशः ।
" " श्रीहेरुकोत्पत्तिविधानलक्षणपटलोऽष्टादशः ।
" " वज्रवाराहीपूजाविधानपटल ऊर्नावंशतितमः ।
" " पीठादिनिर्णयोत्पत्तिपटलः विंशतितमः
" " पात्रनिर्णयोत्पत्तिपटल एकविंशतितमः ।
" " मण्डलतारणादिपञ्चामृतसाधनपटलो द्वाविंशतितमः ।
" " मण्डलसूत्रादिलक्षणपटलस्त्रयोविंशतितमः ।
" " भूमिशोधनादिमण्डललेखनपटलश्चतुर्विंशतितमः ।
" " मण्डलाधिष्ठात्राद्यभिषेकपटलः पञ्चविंशतितमः ।
" " ध्यानादिचक्रभावनापटलः षड्विंशतितमः ।

## 59. कल्पराजमहातन्त्र

**ग्रन्थ**—कल्पराजमहातन्त्र

**संख्या**—M B B I-58

**पत्रसंख्या**—1-136, **पंक्ति प्र० प०**—6, **अक्षर प्र० पं०**–28

**आधार**—नेपाली कागज, **लिपि**–नेवारी, **पूर्ण** ।

**प्रारम्भ**

ॐ नमः श्रीमञ्जुवज्राय

एवं मया श्रुतमेकस्मिन्समये भगवान् सर्वतथागतकायवाक्चित्तवज्रयोगिनीभगेषु विजहार। आर्यानन्दप्रभृतिवीतरागप्रमुखार्यावलोकितेश्वरादा(द्य)शीतिकोटियोगीश्वरमध्ये वज्रधरं व्यवलोक्य स्मितमकार्षीत्।। अथ वज्रधरोत्थायासनादेकान्तोत्तरासङ्गं कृत्वा दक्षिण-जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य कृताञ्जलिपुटो भूत्वा भगवन्तमध्येषयामास।

श्रोतुमिच्छामि भगवन्नुत्पत्तियोगलक्षणम्।
उत्पन्नं च कथं देव सर्वाकारैकसंवरम्।।
कथं वाय्वग्निरापश्च पृथिव्याकाशमेव च।
पञ्चाकारः कथं देव षड्विषया ततः प्रभो।।

**अन्त**

पूर्वे ॐ श्रीवज्रकरालि हूँ2 फट् स्वाहा। दक्षिणे ॐ वज्रज्वालिनि हूँ2 फट् स्वाहा। पश्चिमे ॐ वज्रकुण्डलि हूं2 फट् स्वाहा। उत्तरे ॐ वज्रभैरवी होः हूँ फट् स्वाहा।

सर्वं प्रणवान्तं श्रींकारं च जपेत् क्रमशः परम्।
एवं जपेत्ततो मन्त्री सिद्धो डाकिनीजालसंवरम्।।
षण्मासमात्रतो वश्य मूकोभावप्रसंगतः।
दीप्यतेऽसौ महायोगी सिध्यते जालमुत्तमम्।।
सर्वेषामेव मन्त्राणां लक्षायुतं जाप्यताम्।
सिध्यते मन्त्रराजानो हृदयोत्तमं जायते।।
वीरडाकिनी सिध्येत......कारी भविष्यति।
परपुरिप्रवेशगमनं चतुर्द्वारं च लभ्यते।।
विचरेच्च महायोगी नानारूपधरो भवेत्।।

**पुष्पिका**

इदमवोचत्स गुह्यकाधिपतिर्वज्रकुलप्रणेता नरकुलस्य सम्पन्नता-महातन्त्रराजे डाकडाकिनी-जालसंवरोद्भवे ओडियानविनिर्गतः सपादलक्षोद्धृतः त्रयोदशभुवनपटलः समाप्तः।

ये धर्मा हेतुप्रभवा हेतुस्तेषां तथागतो ह्यवदत्।
तेषां च यो निरोध एवंवादी महाश्रमणः।।

**विवरण**

इस ग्रन्थ की माइक्रोफिश कापी इण्डियन एडवांस स्टडी फार वर्ल्ड रिलीजन न्यूयार्क से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में प्राप्त हुई है, जिसकी फोटो कापी से यह विवरण दिया जा रहा है।

**विषयनिर्देश**

इस ग्रन्थ में 13 पटल हैं, जिनका विषय अवान्तर पुष्पिकाओं में इस प्रकार दिया गया है—

इति कल्पराजमहातन्त्रे वज्रसत्त्वादि ज्ञात्वा संवेगचित्तपरीक्षासूत्रपटलः प्रथमः ( पत्र 16 )
,, ,, गुह्यवज्रविलासिनी नाम योगिनीजालपटलः द्वितीयः ( पत्र 32 )
,, ,, श्रीहेवज्रभ्रमहरोनाम तृतीयः पटलः ( पत्र 46 )
,, ,, शून्यनिर्माणचक्रोत्पत्तिर्नाम चतुर्थः पटलः ( पत्र 52 )
,, ,, मञ्जुवज्रप्रसिद्धगुह्यकायोत्पत्तिपटलः पञ्चमः ( पत्र 62 )
,, ,, सुखसम्भोगबोधिसाधनपटलः षष्ठः ( पत्र 72 )
,, ,, पञ्चभूतादिमहामण्डलनिष्पन्नयोगपटलः सप्तमः ( पत्र 82 )
,, ,, सर्वाङ्गभावनादिमाण्डलेयदेवतापटलोऽष्टमः ( पत्र 93 )
,, ,, कर्मभेदविधानपटलो नवमः ( पत्र 105)
,, ,, दानपारमितादिसहजोदयमण्डलगाथापटलः दशमः ( पत्र 113)
,, ,, योगाम्बरादिवज्रसत्त्वोत्पत्तिपटल एकादशमः ( पत्र 119)
,, ,, मञ्जुवज्रसाधनादिमहागुह्यरहस्यपटलो द्वादशमः ( पत्र 127)
,, ,, श्रीसंवरोद्भवमहामण्डलराजोनाम पटलस्त्रयोदशमः ( पत्र 136)

**विशेष वक्तव्य**

इस ग्रन्थ में "गुह्यवज्रविलासिनी नाम योगिनीजालपटलो द्वितीयः" यह पटल शबरपाद की कृति है। यद्यपि ग्रन्थ में उनका नाम नहीं दिया है, किन्तु गुह्यसमयसाधनसंग्रह में वज्रविलासिनीसाधन नाम से जो ( ग्रन्थांक 9) दिया गया है, इससे यथावत् मिलता है। इसका विवरण 'धीः' के अंक 1 ( पृष्ठ 13–15 ) में दिया जा चुका है।

5 पटल से 10 पटल तक पूरे पटलों में अपभ्रंश गाथाओं के प्रतीक देकर उनकी संस्कृत में व्याख्या प्रसङ्ग सहित की गई है, किन्तु वे प्रतीक कहां से लिये गये हैं, इसका निर्देश नहीं है। इसके अतिरिक्त निम्न गाथायें स्वतंत्र रूप से दी गयी हैं—

यावइ इंदिय तरुणिय शक्ति। तावत्करहु धर्म अनुरक्ति।
जवे भजो वन जाइह भागि। किय कुपि खलिहा रागि आगि॥ ( पत्र 4 )

## 09. प्रज्ञावज्रावतारणयोग

**ग्रन्थ**—प्रज्ञावज्रावतारणयोग
**संख्या**—ल० सं० 5–39
**पत्र सं०**–8 ( 111–118 ),
**आधार**—ने० का०, लिपि–नेवारी, पूर्ण ।

**प्रारम्भ**

अथ [प्रज्ञावता]रस्य मन्त्रयोगक्रमेण तु ।
तत्त्वसंग्रहसिद्धिः स्यात्तदर्थोप[ क्लेश ]क्लेशकैः ॥
प्रज्ञामुपायमूलस्य साधयेत् स्वच्छकर्मणा ।
प्रज्ञाज्ञानावभासस्थमुपायं {नयनीतिका ॥
प्रज्ञामूलमिदं योगी नीतिस्तस्य सहायतः ।
प्रज्ञानीतिसहायेन [ सर्वं ]क्लेशविवर्जितम् ॥
भावदोषम(षान)नेकांश्च तृष्णामोहादिमालयेत् ।
वस्तुस्थानमनित्यं तु तस्मात्संज्ञां परित्यजेत् ॥

**अन्त**

ज्वालामालासुतीक्ष्णं तु त्रिभिर्धातुसमासकैः ।
[त्र]यश्चारूपं निष्पाद्य द्वयकान्तिस्वरूपकैः ॥
दण्डवज्रेश्वरं नाथं प्रज्ञामेखलमालयम् ।
वज्रघण्टप्रयोगं तु साध्ये(धयेत्) परमं पदम् ॥
.........निपीडं तु द्वयलिङ्गेन जापयेत् ।
प्राणमाहूत अन्तस्य अलिबीजस्य मध्यमाम् ॥
शाश्वतं परमं सूक्ष्मं साधये[ त् ] सुखचेतसा ।
मनः पूजाविधानं तु मनः सर्वत्र साधयेत् ॥

**पुष्पिका**

प्रज्ञावज्रावतारणयोगः समाप्तः ।

**विवरण**

यह ग्रन्थ श्री जगन्नाथ उपाध्याय के व्यक्तिगत संग्रह से उपलब्ध हुआ है । राष्ट्रीय अभिलेखालय नेपाल से उन्होंने 'चतुष्पीठमहातन्त्र' नामक ग्रन्थ की ( जिसकी ल० सं०

5–39 है ) प्रतिलिपि करवाई थी। पूरे ग्रन्थ की पत्र संख्या 118 थी, जिसमें 1–110 तक चतुष्पीठ तन्त्र और 111–118 में यह प्रज्ञावावज्रतारणयोग है। उसीके आधार पर यह विवरण दिया जा रहा है।

**विषयनिर्देश**

जैसा कि ग्रन्थ के नाम से ही स्पष्ट है, इसमें प्रज्ञा और वज्र ( उपाय ) का शरीर में अवतारण कर बुद्धत्व प्राप्ति का साधन वर्णित है। साधन की वही विधि वर्णित है, जैसी अन्य साधनों में होती है, किन्तु प्रक्रिया में अन्तर है। क्योंकि यह तन्त्र का नहीं योग का ग्रन्थ है। ग्रन्थ बीच-बीच में खण्डित और भाषा अत्यन्त अव्याकृत होने से समझने में कठिनाई प्रतीत होती है।

समाप्ति की पुष्पिका के बाद निम्न फलश्रुति दी गयी है—

अथ सर्वाणि सारस्य संहिता श्रेष्ठमुत्तमम्।  
मा(आ,दरेण तु गृही(ह्णी)याद् योगतन्त्रानुसारतः॥  
शुद्धभावेन भोक्तव्यं स्फटिकाकारचेतसा।  
सर्वलक्षणसंयुक्तं शुद्धभावेन भावितः॥  
अथ कल्पमकल्पं वा भक्षाभक्षसमेन तु।  
अपेक्षा स्वेच्छमुक्तं तु संसारपारगामिनः॥  
पूर्वदीक्षादिवीराणां तं संगृह्य यत्नतः।  
क्रमक्रमेण मासानां दिनसंवत्सरेण तु॥  
व्रतलक्षणचत्वार तद्गुणं परिव''' च।  
अष्टम्यां च विशेषेण पौर्णमास्यां चतुर्दशी॥  
बलिर्दातव्यो यत्नेन क्रमपश्वाव्रतमेव च।  
तस्य सर्वाणि कर्माणि॥ ० ॥  
ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत्।  
तेषां च यो निरोध एवंवादी महाश्रमणः॥

———

# लुप्त बौद्ध-वचन संग्रह

## —व्रजवल्लभ द्विवेदी, ठिनलेराम शाशनी—

[ इस शीर्षक के अन्तर्गत "धीः" के पिछले अंकों में अनेक ग्रन्थों और ग्रन्थकारों के लुप्तप्राय वचनों का संग्रह आवश्यक टिप्पणियों के साथ किया गया है। छठे अंक में गुह्यसमाजतन्त्र की चन्द्रकीर्ति कृत प्रदीपोद्योतन व्याख्या में उद्धृत ग्रन्थों के वचनों को सङ्कलित किया गया था। अब इस अंक में प्रधानतः लघुकालचक्र तन्त्र की टीका विमलप्रभा में उद्धृत वचनों को संकलित किया जा रहा है। इनमें प्रधानता मूलतन्त्र के वचनों का है। मुद्रित प्रथम भाग से इनका संकलन किया गया है। सेकोद्देशटीका में भी मूलतन्त्र के अनेक वचन उद्धृत हैं। सेकोद्देशटीका में उद्धृत अन्य वचनों का संकलन तो "धीः" के प्रथम अंक में कर दिया गया था, किन्तु उस समय मूलतन्त्र के वचन वहां संगृहीत नहीं किये जा सके थे। अब उनको भी यहाँ ले लिया गया है। मूलतन्त्र के गद्यात्मक वचन भी यहाँ ( पृ० 9-13 ) देखने को मिलते हैं। उनको यहाँ संगृहीत नहीं किया गया है। ]

### [1]कालोत्तरतन्त्रम्

( 1 )

[2]यथा वामा तथाऽवामा मध्यमा च तथैव च।
त्रिवर्षान्ते मखादा ··· ···· ··· ···· ··· ··· ···· ॥

---

1. गुह्यसिद्धि ( 8-12 ) में स्मृत ग्रन्थ से यह अभिन्न प्रतीत होता है। "कालोत्तरे ऊर्ध्वश्रोत्रे उक्तमीश्वरेण" ( पृ० 196 ), "इति परसिद्धान्ते" ( पृ० 196 ) विमलप्रभाकार के ये दोनों वचन भी इसकी पुष्टि करते हैं। यहाँ 'ऊर्ध्वश्रोत्रे' के स्थान पर 'ऊर्ध्वस्रोतसि' पाठ उचित प्रतीत होता है। द्वैतवादी सिद्धान्तशैवागमों के अनुसार उनका प्रादुर्भाव शिव के ऊर्ध्वमुख ( स्रोतस् ) से माना जाता है। गुह्यादि-अष्टसिद्धिसंग्रह, उपोद्‌घात, पृ० 23-24 भी देखिये।

2. वि० प्र०, पृ० 196

# [1]परमादिबुद्धतन्त्र

( 1 )

[2]सर्वज्ञो ज्ञानकायो यो मार्तण्डवपुरव्ययः ।
पद्मपत्रायताक्षः श्रीबुद्धः सिंहासने स्थितः ॥
कायवाक्चित्तरागात्मा वज्रसत्त्वोऽधिदेवता ।
कायवाक्चित्तरागेण कायवाक्चित्तमण्डले ॥
अभेद्यो वज्रयोगोऽसौ कालचक्रोऽक्षरः सुखः ।
अनादिनिधनो बुद्ध आदिबुद्धो निरन्वयः ॥
सर्वतो वज्रसौभाग्यः सर्वतो विश्वसंवरः ।
द्वादशाकारसत्यार्थः षोडशाकारतत्त्वधृक् ॥

( 2 )

[3]कायवाक्चित्तयोगेन शास्तुः पादाम्बुजद्वयम् ।
रत्नपुष्पैः समभ्यर्च्य सपुष्पाञ्जलिना पुनः ॥
शिरसा जानुयुग्मेन भूगतेन प्रणम्य च ।
ततो भूम्यां समस्थाप्य दक्षिणं जानुमण्डलम् ॥
ललाटे करपुटां(टं) दत्त्वाऽध्येषणां कुरुते नृपः ।
देशयित्वाखिलं शास्ता सर्वतन्त्रनिरुत्तरम् ॥
आदिबुद्धं सदा सर्वं सिद्धिसन्दोहलक्षणम् ।
योगं श्रीकालचक्रेऽस्मिन्नालिके(का)लिसमन्विते ॥
एकक्षणाभिसम्बुद्धं चतुःक्षणविभेदितम् ।
चतुर्बिन्दुधरं तत्त्वं भिन्नं षोडशभेदतः ॥

---

1. आदिबुद्ध के दो वचन 'धीः' के द्वितीय अंक ( पृ० 50 ) में संगृहीत हैं। उससे यह ग्रन्थ अभिन्न हो सकता है। यहाँ आगे संगृहीत मूलतन्त्र के 15 वें वचन में राजा सुचन्द्र को कालचक्र मूलतन्त्र का अध्येषक और संगीतिकारक बताया है। विमलप्रभा में परमादि-बुद्ध तन्त्र के विषय में भी ऐसा ही कहा गया है—"सुचन्द्रो वज्रपाणिर्दशभूमीश्वरोऽध्येषकः संगीतिकारकश्च परमादिबुद्धे प्रसिद्धः" ( पृ० 42 )। परमादिबुद्ध, मूलतन्त्र और सेकोद्देश नाम कहीं एक ही तन्त्र के तो नहीं हैं ?

2. वि० प्र०, पृ० 32

3. वि० प्र०, पृ० 33

शून्यं ज्ञानं च बिन्दुं च वरं वज्रधरं महत् ।
पञ्चाक्षरं महाशून्यं बिन्दुशून्यं षडक्षरम् ॥
बुद्धदेवासुरानेव बाह्ये देहे परेषु च ।
पुरुषं प्रकृतिष्वेवं पञ्चविंशति(त)मं परम् ॥
देहे विश्वस्य मानं यत् त्रैलोक्योत्पत्तिकारणम् ।
भुक्ति देवासुरादीनां सर्वमेतत् यथा स्फुटम् ॥

## [1]मूलतन्त्रम्

( 4 )

[2]देवस्वभयपितृ(त्रि)ष्टसिद्धयर्थं विक्रयाय च ।
नापराधी हतः सत्त्वो दुर्दान्तैः पापकारिभिः ॥
सावद्यं तस्य तन्मांसं क्रीतं भुक्तं समीहितम् ।
अयाज्ञा(च्त्रा)पतितं पात्रे निरवद्यं तदेव हि ॥
एकस्य प्राणिनो मांसं बहुभिर्भक्षितं वरम् ।
नानेकप्राणिनां मांसं मनुजेनैकेन भक्षितम् ॥
भोक्तव्यं योगयुक्तेन करुणामुत्पाद्य तत्त्वतः ।
निर्विकल्पेन चित्तेन निरवद्यं नान्यदेव हि ॥
कुलग्रहविनाशायान्नपानं च सर्वदा ।
अकुशलाभिगमनं प्रोक्तं वज्रिणा तत्त्वदर्शिना ॥

( 5 )

[3]आद्याब्दात् षट्शतैर्वर्षैः सम्भलाख्यो भविष्यति ।
ऋषीणां पाचनार्थाय मञ्जुघोषो यशो नृपः ॥

---

1. मूलतन्त्र के विषय में 'धीः' के प्रथम अंक ( पृ० 149 ) में कुछ कहा गया है । अभी अभी यहाँ भी उसका उल्लेख हुआ है । इस विषय पर अभी पर्याप्त विचार अपेक्षित है । 13-14 संख्या के वचनों को उद्धृत करते समय विमलप्रभाकार ने—"मूलतन्त्रे सेकोद्देशे भगवानाह" (पृ० 223), "मूलतन्त्रे भगवानाह सेकोद्देशे" ( पृ० 228 ) कहा है ।

2. वि० प्र०, पृ० 16

3. वि० प्र०, पृ० 24-26

अस्य तारा महादेवी पुत्रो लोकेश्वरोऽब्जधृक् ।
सुचन्द्र तव वंशे मे शाक्यवंशसमुद्भवे ॥
वाग्मी वज्रकुले येन तेन वज्रकुली यशः ।
चतुर्वर्णैककल्केन कल्की ब्रह्मकुलेन न ॥
एवं मया श्रुताऽनेन ऋषीणां धर्मदेशना ।
परश्रुतान्न सर्वज्ञ इति वादो भविष्यति ॥
येन येन प्रकारेण सत्त्वानां परिपाचनम् ।
तेन तेन प्रकारेण कुर्याद्धर्मस्य देशना(म्) ॥
योगी शब्दापशब्देन धर्मं गृह्णाति यत्नतः ।
देशशब्देन लब्धेऽध्वे( र्थे ) शास्त्रशब्देन तत्र किम् ॥
यथा रत्नस्य मेदिन्यां नामभेदः पृथक् पृथक् ।
देशदेशवशात् प्रोक्तो रत्नभेदो न च क्वचित् ॥
एवं मे शुद्धधर्मस्य नानासंगीतिकारकैः ।
सत्त्वाशयवशात् प्रोक्ता नाना-संज्ञा पृथक् पृथक् ॥
तेनेदं लघुसारार्थं सर्वज्ञेत्यादि मे मतम् ।
श्रीतन्त्रं स्रग्धरावृत्तैस्त्रिशच्चाधिकदिक्शतैः ॥
पटलैः पञ्चभिः पूर्णं वादिराड् देशयिष्यति ।
संगीतिकारकश्चायं टीकाकारः सिताब्जधृक् ॥
तन्त्रेऽस्मिन् ऋषिकुलादीनां बुद्धमार्गप्रकाशकः ।
चन्द्रः सुरेश्वरस्तेजी सोमदत्तः सुरेश्वरः ॥
विश्वमूर्तिः सुरेशानः यशः पुण्डरीकः क्रमात् ।
सूर्यप्रभो गतो राजा विघ्नशक्रः(त्रुः) स निर्मितः ॥
वज्रपाणिः सुचन्द्रस्त्वं क्षितिगर्भो यमान्तकः ।
सर्वनीवरणविष्कम्भी जम्भको मानकः क्रमात् ॥
खगर्भो मञ्जुघोषश्च लोकनाथो यथाक्रमात् ।
यमार्यादिदशक्रोधा बोधिसत्त्वास्त्वदन्तरे ॥
कल्किगोत्रे भविष्यन्ति त्रयोदशाऽन्ये क्रमेण ते ।
यशः कल्की च गोत्रं च कल्की पुण्डरीकस्ततः ॥

भद्रकल्की तृतीयश्च चतुर्थो विजयस्तथा ।
सुमिन्द्रो(त्रो) रक्तपाणिश्च विष्णुगुप्तश्च सप्तमः ॥
अर्ककीर्तिः सुभद्रश्च समुद्रविजयो ध्वजः ।
कल्की द्वादशमः सूर्यो विश्वरूपः शशिप्रभः ॥
अनन्तश्च महीपालः श्रीपालो हरिविक्रमः ।
महाबलोऽनिरुद्धश्च नरसिंहो महेश्वरः ॥
अनन्तविजयः कल्की यशःकल्की ततः पुनः ।
तस्य पुत्रो महाचक्रो रौद्रकल्की भविष्यति ।
म्लेच्छधर्मान्तकृद्वाग्मी परमा(मः) स्वसमाधिना ॥
येन सूर्यरथादीनां वाग्मी शास्ता भविष्यति ।
सुचन्द्र मूलतन्त्रे त्वं तेन संगीतिकारकः ॥
टीकाकारस्त्वमेवात्र सत्त्वानां परिपाचकः ।
लघुतन्त्रे मञ्जुघोषः टीकाकारोऽब्जधृक् स्वयम् ॥ इति ।

( 6 )

[1]सुचन्द्र सर्वबुद्धानां देयं नित्येष्टवस्तुकम् ।
शिष्येभ्यश्च गुरूणां च भार्यादुहितृपुत्रकम् ॥
गन्धो भवति मेदिन्या तोये रूपं रसोऽनले ।
वायौ स्पर्शोऽक्षरे शब्दधर्मधातुर्महानये ॥
गन्धधूपादिदीपैभिः खानपानादिवाससैः ।
पूजयित्वा महामुद्रां गुरौ ददति सत्सुतः ॥

( 7 )

[2]एकारे मध्यवंकारः सर्वबुद्धसुखालयः ।
खधातौ वज्रसत्त्वोऽयं कायवाक्चित्तयोगतः ॥
कार्यो बिन्द्विन्दु शुक्रं च वाग्विसर्गो रजो रविः ।
चित्ताकार(रा)स्त्वमी प्रोक्ता एखधातौ व्यवस्थितः ॥
कायवाक्चित्तयोगेन कायवाक्चित्तमण्डले ।
कायवाक्चित्तरागेण संस्थितस्त्रिभवात्मनि ॥

1. वि० प्र०, पृ० 29-30
2. वि० प्र०, पृ० 35

( 8 )

[1]सन्ध्याभाषं तथा नैव रुतं चैव तथा न च।
नेयार्थं न च नीतार्थं तन्त्रं षट्कोटिलक्षणम् ॥

( 9 )

[2]ए रहस्ये खधातौ वा भगे धर्मोदयेऽम्बुजे।
सिंहासने स्थितो वज्रो उक्तस्तन्त्रान्तरे मया ॥
वं वज्री वज्रसत्त्वश्च वज्रभैरव ईश्वरः।
हेरुकः कालचक्रश्च आदिबुद्धादिनामभिः ॥
नानाविषयसंज्ञाभिः स्थानमाधारलक्षणम्।
आधेयश्च मया प्रोक्तो नानासत्त्वाशयेन च ॥
सर्वज्ञो वज्रधृक् शास्ता बुद्धः सिंहासने स्थितः।
देशकः कालचक्रस्य सुचन्द्राध्येषितस्त्वया ॥

( 10 )

[3]अस्ति-नास्ति-व्यतिक्रान्तो भावाभावक्षयोऽद्वयः।
शून्यताकरुणाभिन्नो वज्रयोगो महासुखः ॥
परमाणुधर्मतातीतः शून्यधर्मविवर्जितः।
शाश्वतोच्छेदनिर्मुक्तो वज्रयोगो निरन्वयः ॥

( 11 )

[4]त्रिकुलं पञ्चकुलं चैव स्वभावैकं शतं कुलम्।

( 12 )

[5]खत्र्यंग्न्याहतमेकाब्दं द्विस्थं द्विगुणितं त्वधः।
पञ्चषष्ट्या हतं लब्धं मूर्ध्नि राशौ धनं क्षिपेत् ॥
शेषं षष्ट्या हतं भूयो भागलब्धं ततोऽप्यधः।
पुनः षष्ट्या हतं शेषं भागलब्धं ततोऽप्यधः ॥

---

1. वि० प्र०, पृ० 35
2. वि० प्र०, पृ० 39-40
3. „ „ पृ० 44
4. „ „ पृ० 50
5. „ „ पृ० 88-89

पुनः षड्भिर्हतं शेषं पञ्चषष्ट्या विभाजितम् ।
लब्धं तस्याप्यधः स्थाप्यं श्वासपिण्डं नराधिप ॥
दिनानि घटिका लिप्ताः श्वासान् कृत्वा त्रिधा पुनः ।
अधो गिरिखशैलाप्तं मध्यराशौ धनं क्षिपेत् ॥
चतुःषष्ट्या ततो लब्धं मूर्ध्नि राशौ ऋणं हरेत् ।
अवशेषदिनान्यत्र घटी पाणीपलानि च ॥
श्वासाश्च मण्डलं भानोश्चक्रभोगाद् भवन्त्यमी ।
दिनैकं हृतमृक्षैर्यन्नाडीभिः षष्टिभिस्ततः ।
सूर्यमण्डलभोगेन पञ्चषष्ट्याधिकशतत्रयेण ॥
सूर्यमण्डलभोगेन लब्धा नाड्यो दिनं प्रति ।
भूयः षष्ट्याहृता लिप्ताः श्वासः षड्भिर्हतो भवेत् ॥
भोगोऽयं सूर्यनक्षत्रनाडिकादिषु योजयेत् ।
अयनादौ प्रत्यहं देयो यावद् भूयोऽयनं भवेत् ॥
उक्तकर्मविधानेन शोधनीयं रवेः पदम् ।
अन्यथा करणमार्गेण शुद्धिर्नास्ति सदा रवेः ॥
अशुद्धे सूर्यभोगेऽस्मिन् सो(शो)धिता मङ्गलादयः ।
न स्फुटा वै भवन्त्यत्र मूलनष्टा इव द्रुमाः ॥
चन्द्रस्य मण्डलं वक्ष्ये राशिचक्रप्रभोगतः ।
चक्रनाड्यो रवेर्नाडी मासभोगेन मिश्रिताः ॥
त्रिंशद्भागेन लब्धाः स्युश्चन्द्रभोगो दिनं प्रति ।
नाडिकाचक्रनाड्यन्ता यैर्भुक्तैश्चन्द्रमादिनैः ॥
घटीपाणीपलश्वासैर्मण्डलं तस्य तद् भवेत् ।
दिनैर्नवशतैः षड्भिः सहस्रै राहुमण्डलम् ॥
प्रसिद्धं मङ्गलादीनां मण्डलं स्वस्ववारतः ।
दिनमेकं हृतं चक्षैर(क्षैं)र्मण्डलेन विभज्जितम् ॥
लब्धं भवति नक्षत्रं शेषं षष्ट्या हृतं पुनः ।
नाड्यो मण्डलभागेन लब्धा लिप्तास्तथैव च ॥
श्वासा मण्डलभागेन ग्रहाणां प्रत्यहं नृप ।
तदैव क्षेपकं कृत्वा ग्रहचारैः शोधयेद् ग्रहम् ॥

ग्रहभोगो यदाऽशुद्धस्तदा चन्द्रकलौ(लो)दये।
ज्ञातव्यश्चन्द्रभोगेनायनरेखास्थितस्य वै ॥
अयनेन शोधयेत् सूर्यं चन्द्रं सूर्येण शोधयेत्।
स्थितमेककलाभोगे इन्दुना मङ्गलादिकम् ॥
तिथिं राहुप्रवेशेन पर्वच्छेदेऽशितेऽशिते।
तिथ्योरुभययोर्मध्ये विमर्देनेन्दुसूर्ययोः ॥
एवं सर्वं परिज्ञानं सिद्धान्ते भोगमन्यथा।
अन्यथा लघुकरणादेरतोऽशुद्धिं विवर्जयेत् ॥इति।

( 13 )

[1]अधश्चन्द्रामृतं याति मरणे सर्वदेहिनाम्।
ऊर्ध्वे सूर्यं रजो राहुर्विज्ञानं भावलक्षणे ॥

( 14 )

[2]नाभ्यब्जे हृदये कण्ठे ललाटोष्णीषपङ्कजे।
भूतोयाग्निमरुच्छून्यं संहारेण प्रवाहिनी।
निर्गच्छन्ती विशन्ती सा सृष्टिना विशति क्षितौ ॥

तथाऽपानशक्तिः

नाभौ गुह्ये च मण्यब्जे कायवाक्चित्तवाहिनी।
निर्गच्छन्ती विशन्ती सा संहारसृष्टिरूपिणी ॥

( 15 )

[3]अग्रतः पूर्णिमाचन्द्रे पृष्ठतः पूर्णिमारवौ।
वामतस्तिमिरे वक्त्रः पुच्छे दक्षिणतः स्थितः ॥
त्रैलोक्यविजयो नाम समयो मारमर्दनः।
तस्मिन् पूर्वमुखः शास्ता रत्नसिंहासने स्थितः ॥
पञ्चरश्मिमयैर्व्यूहैः प्रपूरयन् जगत्त्रयम्।
बोधिसत्त्वैर्मरणै(त्त्वैरसुरै)श्च देवेन्द्रैः पूजितः प्रभुः ॥

---

1. वि० प्र०, पृ० 223
2. वि० प्र०, पृ० 228
3. से० टी०, पृ० 2

दिव्येर्नानाविधैः पुष्पैर्दिव्यैर्गन्धैर्मनोहरैः।
दिव्यै रत्नप्रदीपैश्च दिव्यैर्धूपैः सुगन्धजैः॥
दिव्यैर्नानाविधैश्चूर्णैर्नैवेद्यैरमृतैः फलैः।
विचित्राभरणैर्दिव्यैर्दिव्यैर्वस्त्रैश्च चामरैः॥
घण्टादर्शपताकाभिर्दिव्यैश्च(श्छ)त्रैर्विध(धू)नकैः।
पञ्चाङ्गैर्मौलिसंयुक्तैः प्रणिपत्य पुनः पुन;॥
त्रैलोक्यनायकं बुद्धं बोधिसत्त्वामरादयः।
स्वस्वासने निषण्णास्ते मन्त्रयानश्रुतार्थिनः॥
अभिज्ञालाभिनः केचिद् बोधिसत्त्वाः सुरादयः।
हृष्टतुष्टाशयाः सर्वे मनसा चिन्तयन्ति ते॥
दीपङ्करेण या पूर्वं मन्त्रयानस्य देशना।
कृतास्माकं तु कर्तव्या गौतमेनाद्य साधुना॥
अथातः शम्भलाख्यातो वज्रपाणिविनिर्मितः।
सुचन्द्रनृप आयातः स्वद्वय॑ श्रीधर्मधातुकम्॥
आदौ प्रदक्षिणं कृत्वा शास्तुः पादाम्बुजद्वयम्।
रत्नपुष्पैः समभ्यर्च्य प्रणिपत्य पुनः पुनः॥
कृताञ्जलिपुटो भूत्वा सम्बुद्धस्याग्रतः स्थितः।
तन्त्रस्याध्येषकः शास्तुश्चन्द्रः सङ्गीतिकारकः॥

( 16 )

[1]ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः।
ज्ञानस्यार्थप्रयत्नस्य षण्णां भग इति स्मृतिः॥

( 17 )

[2]गृध्रकूटे यथा शास्तुः प्रज्ञापारमितानये।
तथा मन्त्रनये प्रोक्ता श्रीधान्ये धर्मदेशना॥
कुतः स्थानात्कुतः शास्त्रात्तत्र तन्त्रश्च देशितः।
कस्मिन् स्थाने कया लोकपरिषदा केन हेतुना॥

---

1. से० टी०, पृ० 3

2. ,, पृ० 3-4

गृध्रकूटे महाशैले प्रज्ञापारमितानयम् ।
सन्देश्य बोधिसत्त्वानां महायानं निरुत्तरम् ॥
अथ कस्यां महाचैत्यां धर्मधातुकमण्डले ।
बोधिसत्त्वादिभिः सार्धं विजहार तथागतः ॥
आकाशे त्वजडे ' स्वच्छेऽनवकाशप्रकाशिनि ।
विश्वे वज्रालये लयने धर्मधातौ मनोरमे ॥
तन्त्रस्य देशना पुंसां पुण्यज्ञानप्रयोजनम् ।
एकारो गगनालोको धर्मधातुः प्रकीर्तितः ॥
वंकारः सुगतव्यूह एकारे संव्यवस्थितः ।

( 18 )

[1]जन्मस्थानं जिनेन्द्राणामेकस्मिन् समयेऽक्षरे ।
महाप्राणे स्थिते चित्ते प्राणवाते क्षयं गते ॥
दिव्येन्द्रियसमुद्गते नष्टे मांसेन्द्रियगणे ।
प्रकृतायतने नष्टे दिव्यायतनदर्शने ॥
सर्वं पश्यामि राजेन्द्र अदृष्टं नास्ति मे सदा ॥

( 19 )

[2]गन्धकक्षपुटे राजन्नौषधीः पातयेत् क्रमात् ।
नेत्रेन्द्वग्न्यादिभिर्भागैर्ब्राह्म्याद्याः पञ्चपञ्चकैः ॥
ब्राह्मी नारायणी रौद्री ईश्वरी परमेश्वरी ।
ऐन्द्री लक्ष्मी च वाराही कौमारी चर्चिका तथा ॥
पार्थिवी वारुणी ज्योतिर्वायवी खेचरी तथा ।
माता च भगिनी पुत्री भागिनेयी स्वसा तथा ॥
ब्राह्मणी क्षत्रिणी वैश्या शूद्री डोम्बी तथा स्मृता ।
इत्यौषध्यो महासिद्धि भुक्त्वा ऋद्धिप्रदाः सदा ॥

( 20 )

[3]भागिनेया दुहित्री च भगिनी जननी तथा ।
भार्याया जननी चैव मातुलस्य तथाङ्गना ॥

---

1. से० टी०, पृ० 7
2. ,, पृ० 18
3. ,, पृ० 23

पितुर्भ्रातुस्तथा भार्या भगिनी जनकस्य तु ।
स्वमातुर्भगिनी चैव स्वभार्या वररूपिणी ॥
ताराद्या धर्मधात्वन्ता दशविद्याः स्वगोत्रजाः ।
सेककाले प्रदातव्याः शिष्येण मोक्षकाङ्क्षिणा ॥
न ददाति गुरोर्विद्या यद्येताः कुलरक्षणात् ।
तदा सेको न दातव्योऽन्याभिर्गृहवासिनाम् ॥
मण्डले अभिषिक्ताभिरन्याभिः शूद्रजातिभिः ।
भिक्षूणां श्रामणेराणां दातव्यो गुरुणा नृप ॥
वायव्याद्यास्तु क्रमाच्छूद्री क्षत्रिणी ब्राह्मणी तथा ।
वैश्या डोम्बी च कैवर्ती नटीका रजकी तथा ॥
चर्मकारी च चण्डाली धर्मधात्वन्तजा दश ।
महाविद्याः समाख्याता भुक्तिमुक्तिफलप्रदाः ॥

( 21 )

[1]कर्ममुद्राप्रसङ्गेऽपि ज्ञानमुद्रानुरागने ।
रक्षणीयं महासौख्यं बोधिचित्तं दृढव्रतैः ॥
[ भगे लिङ्गं ] प्रतिष्ठाप्य बोधिचित्तं न चोत्सृजेत् ।
भावयेद् बुद्धबिम्बं तु त्रैधातुकमशेषतः ॥
अनेन रक्षितेनैव बुद्धत्वमिह जन्मनि ।
शीलसम्भारसम्पूर्णं पुण्यज्ञानसमन्वितम् ॥
दशपारमिताप्राप्ताः सम्बुद्धास्त्र्यध्ववर्तिनः ।
अनेन सर्वसम्बुद्धैर्धर्मचक्रं प्रवर्तितम् ॥
अतः परतरं नास्ति ज्ञानं त्रैधातुकेश्वरम् ।
शून्यताकरुणाभिन्नं स्वपरार्थप्रसिद्धये ॥
यदि पालयसि मे पुत्र संवरं सर्वतायिनाम् ।
तदा लप्स्यसे सम्बोधिं सर्वबुद्धैरधिष्ठिताम् ॥
अथ रागाभिभूतात्मा न पालयसि संवरम् ।
गृहीत्वा पुरतो भर्तुस्तदा यास्यसि रौरवम् ॥
मृदुचित्ताद्यदा (पद्मे बोधिचित्तं च्युतं भवेत् ।
पद्मबाह्यं तदा ग्राह्यं ज्ञात्वा मुद्रां स्वजिह्वया ॥

1. से० टी०, पृ० 25

( 22 )

[1]अस्तिनास्तिव्यतिक्रान्तो भावाभावाक्षयोऽद्वयः ।
परमाणुधर्मतातीतः शून्यधर्मविवर्जितः ।
शाश्वतोच्छेदनिर्मुक्तो वज्रयोगो निरन्वयः ॥

( 25 )

[2]सुखं द्वीन्द्रियजं तत्त्वं देवानां रागिणां स्मृतम् ।
त्रैलोक्याचारनिर्मुक्तं बुद्धानां सुखमक्षरम् ॥
हसितेक्षणादिनिर्मुक्तं सर्वद्वन्द्वविवर्जितम् ।
कार्यकारणनिर्मुक्तं त्रैलोक्याभासमद्वयम् ॥

( 24 )

[3]कायवाक्चित्तधातूनां त्राणभूतो यतस्ततः ।
मन्त्रार्थो मन्त्रशब्देन शून्यताज्ञानमक्षरम् ॥
पुण्यज्ञानमयो मन्त्रः शून्यताकरुणात्मकः ।

( 25 )

[4]अकारसंज्ञकः प्रोक्तो धर्मधातुर्महाक्षरः ।
वज्रयोनिर्जिनेन्द्राणां कायवाक्चित्तकारणम् ॥
तद्यथा भगवान् बुद्धः सम्बुद्धोऽकारसम्भवः ।
अकारः सर्ववर्णाग्र्यो महार्थः परमाक्षरः ॥
महाप्राणो ह्यनुत्पादो वाग्व्याहारविवर्जितः ।
सर्वाभिलापहेत्वग्र्यः सर्ववाक्सु प्रभास्वरः ॥
कायवाक्चित्तनिष्पत्तिस्त्रिवज्राभेद्यधर्मिणी ।
यस्याः सा जिनकायानां वज्रयोनिः प्रगीयते ॥
सर्वैश्वर्यादिधर्माणां बुद्धानामुदयो यतः ।
स धर्मोदय आख्यातः पुण्यज्ञानमयः परः ॥

---

1. से० टी०, पृ० 48/4
2. से० टी०, पृ० 58
3. से० टी०, पृ० 69
4. से० टी०, पृ० 69–70

## [1]योगानुविद्धतन्त्र

( 1 )

[2]डाकिनीवज्रपद्मस्थ एकोऽसावधिदेवता ।
सहजानन्दरूपेण संस्थितस्त्रिभवात्मनि ॥

( 2 )

[3]श्रीविश्वरूपिणी नत्वा पृच्छते वज्रभैरवम् ।
तन्त्रं योगानुविद्धं किं वज्रसत्त्वः परं सुखम् ॥

## [4]लक्षाभिधानतन्त्र

( 1 )

[5]रहस्ये सर्वदूतीनां सर्वसत्त्वात्मनि स्थितः ।
सर्वदूतीमयः सत्त्वो वज्रसत्त्वो महासुखः ॥

( 2 )

[6]प्रणम्य वज्रवाराहीं हेरुकं त्रिभवात्मकम् ।
तन्त्रं लक्षाभिधानं किं वज्रसत्त्वः परं सुखम् ॥

## [7]लोकेश्वरस्तोत्र

( 1 )

[8]ये मुक्ता भवबन्धनैरपि भवं गृह्णन्ति सत्त्वार्थिनः
कालात् कर्मफलं त्यजन्ति नहि तत् शून्यार्थसन्देशकाः ।
संज्ञानानलदग्धचित्तकलुषाः सम्यक् कृपार्द्राः सदा
तान् सत्त्वार्थरतानतर्कचरितान् बुद्धान् नमामा(मो) वयम् ॥

---

1. विमलप्रभाकार इसको उद्धृत करते हुए लिखते हैं—"षट्त्रिंशत्साहस्रिके योगानुविद्धे" (पृ॰ 32) । इससे प्रतीत होता है कि यह एक विशाल तन्त्र ग्रन्थ है ।
2. वि॰ प्र॰, पृ॰ 33
3. वि॰ प्र॰, पृ॰ 34
4. 'धीः' के तृतीय अंक ( पृ. 42 ) में लक्ष्याभिधान तन्त्र का एक वचन संगृहीत है । उससे यह नाम अभिन्न लगता है ।
5. वि॰ प्र॰, पृ॰ 33
6. वि॰ प्र॰, पृ॰ 34
7. "मम लोकेश्वरस्य स्तोत्रम्" ( पृ॰ 23 ) विमलप्रभाकार की उक्ति से प्रतीत होता है कि वे इस स्तोत्र के रचयिता हैं । लोकेश्वरशतक से यह स्तोत्र भिन्न है ।
8. वि॰ प्र॰, पृ॰ 23

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—व्रजवल्लभ द्विवेदी, ठिनलेराम शाशनी—

[ इस योजना के स्वरूप पर 'धीः' के प्रथम अंक में प्रकाश डाला जा चुका है। प्रथम दो अंकों में प्रधानतः सेकोद्देशटीका तथा अद्वयवज्रसंग्रह से विशिष्ट पारिभाषिक शब्दों की व्याख्याएं संकलित की गयी थीं। तृतीय अंक में साधनमाला, तत्त्वज्ञानसंसिद्धिटीका, दोहाकोशव्याख्या और चर्यागीतिकोशव्याख्या से, चौथे अंक में गुह्यादि-अष्टसिद्धिसंग्रह से, पांचवें अंक में हेवज्रतन्त्र और उसकी व्याख्या योगरत्नमाला से तथा छठे अंक में गुह्यसमाजतन्त्र की चन्द्रकीर्ति कृत प्रदीपोद्योतनव्याख्या से इनका संकलन किया गया। अब प्रस्तुत अंक में कालचक्रतन्त्र तथा उसकी व्याख्या विमलप्रभा से इस प्रकार के शब्दार्थों का संग्रह किया जा रहा है। ]

**अडकवती**

बाह्येऽडकशब्देन नष्टप्राणो मृतकसमूहः, सोऽस्यामस्तीति अडकवती श्मशानभूमिः। ........ अध्यात्मनि अडक इति षट्शताधिकैकविंशतिसहस्रश्वासप्रश्वासानां षट्त्रिंशच्छतोनानां निरोधः, सोऽस्यामस्तीति धर्ममेघा भूमिः। ( वि० प्र०, पृ० 17 )

**अग्नित्रयम्**

हृत्कण्ठे नाभिपद्मे पवरविशिखिनस्तत्स्फुरन्ति क्रमेण
धन्वाकारे च वृत्ते त्वनुदिनहवने चाब्धिकोणे च कुण्डे।
तेषामूर्ध्वे परोऽग्निः स्फरदमलकरो ज्ञानमूर्तिस्तमोऽन्ते
यस्मिन् सूर्यो न विद्युत्तपति शशधरो न ग्रहास्तारकाद्याः॥

( का० 2.36 )

**अधिकमासः**

सूर्यस्य द्वात्रिंशत्सार्धमासैरधिकमासोऽमावास्यायां संक्रमणाभावात्। ( वि० प्र०, पृ० 78 )

**अभिसम्बोधिचतुष्टयम्**

एकक्षणाभिसम्बोधिः, पञ्चाकाराभिसम्बोधिः, विंशत्याकाराभिसम्बोधिः, मायाजालाभिसम्बोधिश्च। ( वि० प्र०, पृ० 20 )

इहैकक्षणाभिसम्बोधिर्नाम परमाक्षरमहासुखक्षण इति।....... एवमेकक्षणाभिसम्बुद्धो ज्ञानवज्रः सर्वार्थदर्शी पञ्चाकाराभिसम्बुद्धश्चित्तवज्रः परमाक्षरसुखः।

विंशत्याकारसम्बुद्धो वाग्वज्रो द्वादशाकारसत्यार्थः सर्वसत्त्वरुतैर्धर्मदेशकः। मायाजालाभि-सम्बुद्धः कायवज्रः षोडशाकारतत्त्वविदनन्तमायाजालैः स्फारितकाय इति।

( वि० प्र०, पृ० 44-45 )

**आधाराधेयभावः**

पृथ्वीगर्भो हुताशो भवति न धरणीमारुतौ शून्यगर्भौ

.... .... .... .... .... ....

वायोः शून्यं नरेन्द्र प्रभवति हि तथाधार-आधेयभावः॥

स्कन्धाधारो हि भौतो भवति वरतनौ भूतवृन्दस्य नाड्यो

.... ... ... ... .... ....

भर्ताधारस्तयोश्च त्रिभुवननमितोऽनाहतः सर्वगो यः॥

( का० 2.18-19 )

**उत्पन्नक्रमः**

उत्पन्नक्रमः सहजो निर्विकल्पः सर्वाकारो मुखभुजवर्णसंस्थानकल्पनारहित इति।

( वि० प्र०, पृ० 20 )

**एकारः**

एकार-रहस्य-पद्म-धर्मोदय-खधातु-महासुखावास-सिंहासन-भग-गुह्यसंज्ञानां मध्ये नैका एकार-संज्ञा प्रधाना, सर्वासां सर्वाकारशून्यताप्रतिपादकत्वात्। ........एवमेकार-वंकारयोः सर्वाकारवरोपेता शून्यता सर्वधर्मनिरालम्बकरुणाऽभिन्नबोधिचित्तभावप्रतिपादकत्वात्।

( वि० प्र०, पृ० 34 )

ए रहस्ये खधातौ वा भगे धर्मोदयेऽम्बुजे।
सिंहासने स्थितो वज्री उक्तस्तन्त्रान्तरे मया॥

( वि० प्र०, पृ० 39 )

**एवंकारः**

एवंकारो वज्रसत्त्वो बोधिचित्तं कालचक्र आदिबुद्धः प्रज्ञोपायात्मको योगो ज्ञेयज्ञानात्मकोऽद्वयोऽनादिनिधनः शान्तः समाजः संवर एवमाद्यनेकसंज्ञाभिः प्रज्ञोपायात्मकोऽद्वयो योगो निरन्वयो योगिनाऽवगन्तव्य इति। ( वि० प्र०, पृ० 34 )

मूलतन्त्रे भगवानाह—

एकारे मध्यवंकारः सर्वबुद्धसुखालयः।
खधातौ वज्रसत्त्वोऽयं कायवाक्चित्तयोगतः॥ (वि० प्र०, पृ० 35)

**कर्ता**

आलयविज्ञानलक्षणः शुक्रच्युतिक्षणः सहजानन्दो लोकसंवृत्येति। (वि० प्र०, पृ० 215)

**कर्मज्ञानमहामुद्रासिद्धिः**

कर्ममुद्रा स्तनकेशवती। ज्ञानमुद्रा स्वचित्तपरिकल्पिता। महामुद्रा विकल्परहिता प्रतिसेनास्वरूपिणी। आसां त्रिविधा सिद्धिः—कामावचरा कर्ममुद्रासिद्धिः, रूपावचरा रूपभवभावलक्षणा ज्ञानमुद्रासिद्धिः, भावाभावरहिता सर्वाकारवरोपेता महामुद्रासिद्धिरिति॥

( वि० प्र०, पृ० 21 )

**कलियुगसमयः**

कलियुगसमय इति कोऽलिः कलिः, ककारादिव्यञ्जनपङ्क्तिरिति। ककारो मुखं सर्वव्यञ्जनानाम्, आदौ निर्दिष्टत्वात्, रजःस्वभावाद् वा वेदितव्य इति। तथा अस्य समयोऽसमयः, स्वरमेलापक इत्युच्यते। अत्र कोऽलिः—क् ख् ग् घ् ङ् च् छ् ज् झ् ञ् ट् ठ् ड् ढ् ण् प् फ् ब् भ् म् त् थ् द् ध् न् स् ष् श् क इति कोऽलिर्व्यञ्जनपङ्क्तिः। अत्रासमयः—अ आ इ ई ऋ ॠ उ ऊ ऌ ॡ अं अः, अ आ ए ऐ अर् आर् ओ औ अल् आल् अं अः, ह हा य या र रा व वा ल ला ह् हः इति असमयः स्वरमेलापकः। अस्मिन्नसमये कलिं युनक्तीति कलियुगसमयः। ( वि० प्र०, पृ० 46 )

**कायचतुष्टयम्**

गर्भे संशुद्धकायः प्रसवनसमयाद् दन्तभावे च धर्मः।
... .... .... ... ... .... .... ...
दन्तेभ्यो मृत्युसीम्ने भवति जिनपतेर्बाह्यनिर्माणकायः॥

( का० 2.14-16 )

**कालचक्र**

करुणाशून्यतामूर्तिः कालः संवृतिरूपिणी।
शून्यता चक्रमित्युक्तं कालचक्रोऽद्वयो मतः॥

( वि० प्र०, पृ० 8 )

कालः परमाक्षरो महासुख[ल]क्षणः, तेनोत्पादितं निरावरणं स्कन्धधात्वादिकं चक्रं यस्य शरीरम्, असौ कालचक्रः। अन्यच्च, प्रत्येकैकैकाक्षरेण—

काकारो कारणे शान्ते लकाराच्च लयोऽत्र वै।
चकाराच्चलचित्तस्य क्रकारात् क्रमबन्धनात्॥

क्रमः कायादीनां बिन्दूनां च्यवनम्, तस्य बन्धः सहजसुखेनेति कालचक्रः।

( वि० प्र०, पृ० 17 )

एवं कर्मास्तिवादी भवति स भगवानेकशास्ता न कर्ता
सर्वज्ञश्चादिबुद्धस्त्रिभुवननमितः कालचक्री न चक्री।

ब्रह्मा विष्णुश्च रुद्रः शरणमधिगतो यस्य पादाब्जमूले
तं वन्दे कालचक्रं जिनवरजननं निर्गुणं निर्विकल्पम् ॥ ( का० 2.92 )

ज्ञानकायो भगवान् सम्यक्सम्बुद्धो देवासुरनागादिभिर्नमस्कृतचरणारविन्दः कालचक्र इति। ( वि० प्र०, पृ० 225 )

**कालचक्रैकवीरः**

उत्पादक्षयहेतुभूतः संसारिणां कालचक्रैकवीरः। (वि० प्र०, पृ० 212)

**कुलिशधरः**

एतदेव पञ्चाक्षरमहाशून्यं षट्त्रिंशदात्मकं कुलिशमुच्यते जिनैः। तं धरतीति कुलिशधरः। बिन्दुशून्यः षडक्षर एकारो धर्मोदयः सर्वाकारशून्यतारूप इति। ....एवं बिन्दुशून्यषडक्षरो धर्मोदयः कुलिशधर एकार इति शून्यता सालम्बा प्रतिसेनास्वरूपिणीति। ( वि० प्र०, पृ० 49 )

**गुह्यम्**

गुह्यं श्रावकप्रत्येकयानयोरुत्तरं वज्रयानम्। ( वि० प्र०, पृ० 17 )

**ग्राह्यग्राहकभावः**

शून्यं गृह्णाति शब्दं खलु जिनजनको धर्मधातुं च वायु-
र्गन्धं वह्निश्च रूपं रसमपि सलिलं स्पर्शमेव धरित्री। ( का० 2.20 )

**चतुःकायाः**

शुद्ध-धर्म-सम्भोग-निर्माणा इति। ( वि० प्र०, पृ० 20 )

**चत्वारो वृद्धाः**

अत्र चत्वारो वृद्धाः परलोकेहलोकार्थमाराधनीयाः सत्त्वैः। एषु ज्ञानवृद्धोऽभिज्ञालाभी मुदिताभूमिप्राप्तो वज्राचार्यो भिक्षुः गृहस्थो वा पूज्यो दशभिक्षुसमो भगवतोक्त इति। तस्याभावे तपोवृद्धः काषायधारी काषायधारिणां वर्षाग्रेण मन्त्रिणामभिषेकेण गृहस्था-चार्याणां सर्वदा वन्द्यः, तपोवृद्धत्वात्, गृहस्थानामभिज्ञाभावात्। श्रुतवृद्धः पण्डितः पूज्यः शासनोद्योतकः परवादिनां मारकायिकानां दमकः। एते परलोकार्थमाराधनीयाः सत्त्वैरिति। धनवृद्धो राजा इहलोकभोगार्थिभिराराधनीयः। ( वि० प्र०, पृ० 54 )

**चन्द्र :**

चन्द्रशब्देनापानवायुः। ( वि० प्र०, पृ० 196 )
अपानो विण्मूत्रचन्द्रनाडीनामधिपतिर्नाभेरधः प्रवाहतः। ( वि० प्र०, पृ० 196-197 )

**जन्यजनकभावः**

गन्धोत्पत्तिर्धरण्यामपि शिखिनि रसस्योदके रूपधातो-
र्वायौ स्पर्शस्य शान्ते त्वपि भवति रवस्याम्बरे धर्मधातोः ।

( का० 2.20 )

**जिनजनकः**

जिनजनक इति वज्रसत्त्वः शाक्यमुनिः, निरावरणस्कन्धानां जनको जिनजनकः ।

( वि० प्र०, पृ० 157 )

**ज्ञानम्**

ज्ञानमित्यनया संज्ञया तृतीयं शून्यमित्यवगन्तव्यम् । तद्यथा—वेदनास्कन्धतेजोधातुचक्षूरस-पाणिगतिश्च । एषां निरावरणता समरसत्वमेकलोलीभूतत्वं ज्ञानं तृतीयाक्षरं महाशून्यमिति । अस्य संज्ञाचिह्नं मध्यानाहतचिह्नाद् दक्षिणे बिन्दुद्वयमनुच्चार्यमिति ।

( वि० प्र०, पृ० 47 )

**ज्ञानमूर्तिः**

ज्ञानचित्तस्य तुर्याचित्तस्य शुक्रच्युतिकाले तुर्यावस्थार्धर्मिणी सत्त्वानामुत्पादनिरोधहेतुभूता यतः, अतो ज्ञानमूर्तिः । ( वि० प्र०, पृ० 216 )

**ज्ञानवज्रम्**

स्त्रीणां द्वादशवर्षावधि ज्ञानवज्रं शुक्रच्युत्यवस्थालक्षणं सहजानन्दलक्षणं नराणां षोडशवर्षावधेर्वेदितव्यम् । ( वि० प्र०, पृ० 165 )

**तत्त्वम्**

एकानेकक्षणरहितं ज्ञानं तत्त्वमित्युच्यते जिनैः । तदेव सत्त्वानां स्वचित्ताशयवशाच्चतुर्विधं प्रतिभासते, षोडशाकारं च । आनन्द-परम-विरम-सहजभेदैश्चतुर्विधम् । ततः कायानन्दो वागानन्दश्चित्तानन्दो ज्ञानानन्दः । एवं कायपरमानन्दो वाक्परमानन्दश्चित्तपरमानन्दो ज्ञानपरमानन्दः । एवं कायविरमानन्दो वाग्विरमानन्दश्चित्तविरमानन्दो ज्ञानविरमानन्दः । एवं कायसहजानन्दो वाक्सहजानन्दश्चित्तसहजानन्दो ज्ञानसहजानन्दः । एवं षोडशाकार-तत्त्वं यदा योगी वेत्ति, तदा षोडशाकारतत्त्वविदित्युक्तो भगवता । तदेव तत्त्वं सहजकाय इत्युच्यते । ततो धर्मकायः, ततः सम्भोगकायः, ततो निर्माणकायः । एवं सहजवाक, सहजचित्तम्, सहजज्ञानम्; धर्मवाक्, धर्मचित्तम्, धर्मज्ञानम्; सम्भोगवाक्, सम्भोगचित्तम्, सम्भोगज्ञानम्; निर्माणवाक्, निर्माणचित्तम्, निर्माणज्ञानमिति चित्ताधिमुक्तिवशात् सत्त्वानां प्रतिभासते । ( वि० प्र०, पृ० 45 )

**दलः**

दलशब्देन नाड्यः श्वासधर्मिण्यो गृह्यन्ते । ( वि० प्र०, पृ० 179 )

**दशवायवः**

आपानो ज्ञानधातौ त्रिविध इति भवेत् प्राणवायुश्च शून्ये
वायोर्मध्ये समानः शिखिनि पुनरुदानोऽम्भसि व्यान एव।
भूम्यां नागोऽथ कूर्मोऽपि कृकरपवनो देवदत्तो धनञ्ज-
श्चत्वारो वायुवह्न्योरपि पयसि महो संभवन्ति क्रमेण॥

(का० 2.24)

षोडशवर्षान्ते आकाशधातोरानन्दवायुः, ज्ञानधातोः सहजानन्दवायुः। (वि० प्र०, पृ० 169

प्राणोऽपानः समानः कमलवसुदले मारुतश्चाप्युदानो
व्यानो नागश्च कूर्मोऽथ कृकरपवनो देवदत्तो धनञ्जः।
इत्येवं नाडिचक्रे दशविधपवनाः संस्थिताः कमंभेदैः
शङ्खिन्यन्तं त्विडाद्यं स्वहृदयकमलं नाभिचक्रं समस्तम्॥

प्राणः प्राणं करोत्यर्कशशिपथगतस्त्वन्नपानं समस्त-
मापानो नेत्यधस्तात् सकलसमरसं नेति काये समानः।
काये स्पन्दत्युदानो मुखकरचरणैर्गीतनाट्यं करोति
व्यानो व्याधिं करोति प्रकृतिगुणवशाद् गात्रभङ्गं तथैव॥

नागोऽप्युद्गारमेव स्फुटकरचरणात् संकुचन् कूर्मवायुः
क्रोधं क्षोभं समस्तं स कृकरपवनो जृम्भिकां देवदत्तः।
कायं पञ्चत्वगन्तुं त्यजति न नृपते वायुरेको धनञ्ज
एवं प्राणादिसर्वे प्रकृतिगतगुणान् वायवो न त्यजन्ति॥

(का० 2.42-44)

**द्वादशग्रन्थिभेदाः**

इह प्राणिनां तनुगता द्वादशराशयो ग्रन्थिशब्देनोच्यन्ते, तेषां द्वादशराशीनां भेदा वर्षायन-कालयुगऋतुमासपक्षदिनघटिकापाणीपलश्वासा इति। (वि० प्र०, पृ० 258)

**द्वादशसत्यानि**

अविद्या-संस्कार-विज्ञान-नामरूप-षडायतन-स्पर्श-वेदना-तृष्णा-उपादान-भव-जाति-जरा-मरणा-नीति द्वादशसत्यानि गर्भजानां सावरणानि, बुद्धानां निरावरणानीति। द्वादशसंक्रान्तिभेदेन प्राणवायुप्रवाहात् सावरणानि गर्भजानाम्, बुद्धानां निरावरणानि, द्वादशाङ्गनिरोधादिति।

(वि० प्र०, पृ० 20)

7

### नाडीचक्रम्

तस्योर्ध्वं हृत्प्रदेशे वसुदलकमले संस्थितं नाडिचक्रं
प्राणाद्यं वायुवृन्दं रविशशिशिखिनो वामसव्ये च मध्ये।
वामे नाडी शशाङ्को वहति खलु सिता दक्षिणे रक्तसूर्या
मध्ये कालाग्निरूपा प्रवहति विषुवे हीननिःश्वासषष्टिः॥

(का० 2.41)

पिङ्गाः सूक्ष्मास्त्विडाद्यास्त्रिविधपथगता रोहिणी हस्तिजिह्वा
पूषा षष्ठी जयाऽगापि च वसु नवमेऽलम्बुषा श्रीकुहे च।
दिक्संख्या शङ्खिनी या स्रवति नरपते बोधिचित्तं सुखान्ते
एतत् श्रीनाडिचक्रं भवति बहुविधं सन्धिभेदैरनेकैः॥

(का० 2.45)

एवं सर्वाः षट्त्रिंशत् कुलनायिका भवन्ति-षड् रसरूपिण्यः, षड् धातुरूपिण्यः, षडिन्द्रियरूपिण्यः, षड्विषयरूपिण्य; षट् कर्मेन्द्रियरूपिण्यः, षट् कर्मेन्द्रियविषयरूपिण्यः, एवं षड् रूपप्रवर्तिन्यः, षड् वेदनाप्रवर्तिन्यः, षट् संज्ञाप्रवर्तिन्यः, षट् संस्कारप्रवर्तिन्यः, षड् विज्ञानप्रवर्तिन्यः, षड् ज्ञानप्रवर्तिन्य इति षट्त्रिंशत् कुलनाड्योऽप्याधाराधेयसम्बन्धेन द्वासप्ततिरिति ज्ञेयाः। (वि० प्र०, पृ० 188-189)

### नाडीयोगः

ललनारसनयोर्योगान्नाडियोगं मध्यमायां भावयेत प्राणवायुम्, अपानं शङ्खिन्यां विण्मूत्रनाडीयोगमिति। (वि० प्र०, पृ० 228)

### निमित्तम्

निमित्तमपि त्रिधा—आदिनिमित्तम्, मध्यनिमित्तम्, अन्तनिमित्तं चेति। आदिनिमित्तं धूमादिमार्गः, षडङ्गयोगेन बिम्बनिष्पत्तिरक्षणलाभः। मध्यनिमित्तं परमाक्षरक्षणैरष्टादशशतैरादिभूमिलाभः, पञ्चाभिज्ञाऽदृष्टार्थसन्दर्शनं लौकिकसिद्धिप्राप्तिरिति। अनिमित्तं (अन्तनिमित्तं) बुद्धत्वं वज्रधरत्वमेकविंशतिसहस्रैः षट्शताधिकैः परमाक्षरक्षणैर्द्वादशभूमिलाभान्महामुद्रासिद्धिरिति। (वि० प्र०, पृ० 19)

### नियमः

नियमः श्रावककोटिसंवरः पञ्चकामोपभोगरहितः शीलसंवर इति। (वि० प्र०, पृ० 15)

**निरन्वयः**

अन्वयः प्रज्ञोपायात्मको ग्राह्यग्राहकलक्षणो धर्मः, सोऽन्वयो निरस्तो येनाऽसौ निरन्वयः। ( वि० प्र०, पृ० 17 )

इहान्वयः प्रज्ञापक्ष उपायपक्षश्च, सोऽन्वयो भिन्नपक्षो निरस्तो यस्मात् तत् तन्त्रं निरन्वयम्। प्रज्ञोपायात्मकं योगतन्त्रमित्यद्वयमुच्यते। ( वि० प्र०, पृ० 18 )

**पञ्चप्रदीपम्**

गोऽश्वदन्तीहयनराणां मांसं मक्षिकाच्छर्दिमिश्रं मधुना मिश्रं भुक्तं पञ्चप्रदीपं सकलरुजहरं भवति। अपरं मक्षिकाच्छर्दिमाधवी। ( वि० प्र०, पृ० 236 )

**पञ्चाक्षरं महाशून्यम्**

अत्र पञ्चाक्षराणि स्वरसंज्ञीन्यनुच्चार्याणि। तद्यथा—मध्ये अकारशून्यं कर्तिकाकारम्। दक्षिणे ऋकारशून्यं बिन्दुद्वयम्। वामे उकारशून्यं बिन्दुमेकम्। पूर्वे इकारशून्यं दण्डाकारम्। पश्चिमे ऌकारशून्यं हलाकृतिः। एवं दीर्घगुणवृद्धियणादेशविकारा ज्ञातव्या इति। एवं वंकारः पञ्चाक्षरो महाशून्यो निरालम्बकरुणात्मकः परमाणुधर्मतातीतः प्रतिसेनारूपसदृशो योगिगम्य इति। ( वि० प्र०, पृ० 48 )

**पञ्चामृतयोगः**

इह "यथा बाह्ये तथा देहे" (पृ० 47) इति वचनाद् बाह्ये पञ्चद्रव्याणि, अध्यात्मनि पञ्चद्रव्याण्येकीकृत्य पञ्चामृतयोगः, ततः पञ्चामृतं भक्षितं योगिनामायुदं स्यादिति। बाह्ये विट्शब्देन वैरोचनिर्वलिर्बलेर्वशाद् गन्धको विडुच्यते, अध्यात्मनि विडेव, अनयोस्तुल्यभागः। मूत्रं बाह्ये विष्णुनृपो भृङ्गराजरसम्, अध्यात्मनि मूत्रमेव। रक्तं बाह्ये अभ्रकम्, अध्यात्मनि स्त्रीपुष्पम्, तुल्यभागमिति। शुक्रं बाह्ये पारदः, अध्यात्मनि शुक्रमेव, अनयोः समभागमिति। नृमांसं बाह्ये त्रिफला, अध्यात्मनि मज्जा, अनयोरपि समभागमिति। एवं विडेकभागः, मांसस्य पादोनभागः, रक्तार्धभागः, शुक्रस्य एकपादः, एतदेकीकृत्य मूत्रेण सप्तवारान् भावयेत्। आतपे भूयो भूयः शोषयित्वा ततः प्रत्यहं कर्षमात्रं घृतमधुभ्यां भक्षितं षण्मासावधेरायुदं भवति, शाकाम्लतैललवणवर्जनादिति पञ्चामृतनियमः। ( वि. प्र., पृ. 236 )

**परमादिबुद्धः**

एकक्षण-पञ्चाकार-विंशत्याकार-मायाजालाभिसम्बोधिलक्षणोऽक्षरसुखः परमः, तेनादिबुद्धः। ( वि० प्र०, पृ० 17 )

**पुष्पम्**

इह पुष्पशब्देन ड(द्र)म्मरूपकद्रव्यमुच्यते । ( वि० प्र०, पृ० 240 )

**पुष्पनस्यम्**

पुष्पं स्त्रीरजः, बाह्ये केशराजिका भृङ्गराजः, तस्य रसः स्त्रीपुष्पतुल्यं सध्यानं पुष्पनस्यम् । ( वि० प्र०, पृ० 236)

**प्रकृतिः**

चतुर्विंशत्यात्मिका प्रकृतिः पुरुषस्य ग्राहकधर्मिणो ग्राह्यधर्मिणी प्रकृतिः । स्वाभाविका पुनर्ग्राह्यधर्मरहिताऽपरा प्रभास्वराऽस्तीति । ( वि० प्र०, पृ० 173 )

आद्याः शून्यानि पञ्च प्रकृतिरविकृतिः श्रीकलाबिन्दुनादं
कालश्चित्तं च बुद्धिः प्रकृतिरपि तथान्ये स्वरा मारुताद्याः ।
स्थूला वर्गाक्षराणि त्रिगुणितदशकं षोडशान्ये विकारा-
स्तेषां मध्ये न वज्री प्रकृतिरविकृतिर्व्यापको निःस्वभावः ॥

( का० 2.87 )

शान्ते भावेऽमरत्वं भवति नरपते तामसे नारकत्वं
तिर्यक्त्वं राजसे च प्रवरभुवितले मानुषत्वं च मिश्रे ।
भूतत्वं त्रिप्रकारं रजसि तमसि वै सात्त्विकेऽन्योन्यमिश्रै-
र्यद्भावं मृत्युकाले स्मरति च मनसा सम्भवस्तत्र जन्तोः ॥

( का० 2.93 )

इह शरीरे आदावष्टविधा प्रकृतिः पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहङ्कारात्मिकाष्ट-विधेति ।·······त्रिविधा सत्त्वरजस्तमोभेदेन जाग्रत्-स्वप्न-सुषुप्ति-धर्मिणी प्रकृतिः ।········ अपरा चतुर्थी प्रकृतिर्ज्ञानमूर्तिः । ( वि० प्र०, पृ० 216 )

**प्रत्ययः**

इह मन्त्रनये त्रिविधः प्रत्ययो भगवतोक्तः—प्रथमं तावत् तन्त्रप्रत्ययः, ततो गुरुप्रत्ययः, तत आत्मप्रत्ययः । ( वि० प्र०, पृ० 35 )

आगमात् प्रत्ययश्चैव गुरुतः प्रत्ययस्तथा ।
आत्मतः प्रत्ययश्चैव परतः प्रत्ययस्तथा ॥
चतुर्भिः प्रत्ययैर्ग्राह्यम्··· ····· ······ ।

इति तु वसततिलकटीकायामुद्धृतं ( 10/10 ) गुह्यतत्त्वप्रकाशवचनम् ।

**बिन्दुः**

बिन्दुरित्यनया संज्ञया चतुर्थं शून्यमवगन्तव्यम्। तद्यथा संज्ञास्कन्ध-तोयधातु-जिह्वारूप-पादादानं च। एषां निरावरणता समरसत्वमेकलोलीभूतत्वं बिन्दुरिति चतुर्थाक्षरमहाशून्यमिति। अस्य संज्ञाचिह्नं मध्यचिह्नाद् वामेन बिन्दुमेकमनुच्चार्यमिति। (वि० प्र०, पृ० 48)

**बीजम्**

इह द्वीन्द्रियसंयोगाद् यच्च्युतं भगरक्तं गुह्यकमले तद् बीजमित्युच्यते।

(वि० प्र०, पृ० 169)

**बुद्धः**

बुद्धो विगतमलं चित्तम्। (वि० प्र०, पृ० 23)

**बुद्धत्वम्**

बुद्धत्वं सर्वज्ञता-सर्वाकारज्ञता-मार्गज्ञता-मार्गाकारज्ञता-दशबल-वैशारद्यादिगुणविभूतयः।

(वि० प्र०, पृ० 16)

बुद्धत्वं नाम संसारवासनारहितं चित्तम्। (वि० प्र०, पृ० 23)

**बुद्धरत्नकरण्डकम्**

बुद्धरत्नं परमाक्षरसुखं करण्डकं वज्रमणिपद्ममिति बुद्धरत्नकरण्डकम्। (वि० प्र०, पृ० 20)

**भगवान्**

मारक्लेशभञ्जनाद् भगः सर्वज्ञैश्वर्यादिगुणसमूहः, स भगोऽस्यास्तीति भगवान्।

(वि० प्र०, पृ० 17)

**भूतयोनिः**

इह लोकधातौ चतुर्धा भूतयोनिः—इह पृथिवीयोनिः स्थावरा बाह्ये, अध्यात्मनि लोमानि; बाह्ये वायुयोनिरण्डजाः, अध्यात्मनि यूकाः, बाह्ये उदकयोनिः कृमिकुलादयः संस्वेदजाः, शरीरेऽपि कृमिकुलादीनि, बाह्ये जरायुजाः शुक्रसम्भूता, अध्यात्मनि शुक्रमेव। बाह्येऽनुक्तत्वादित्याकाशधातुः। रसरूपा उपपादुकाः, अध्यात्मन्यण्डरूपाः सूक्ष्मप्राणिन इति भूतयोनिश्चतुर्धा च। (वि० प्र०, पृ० 175)

**मण्डलचक्रम्**

कालचक्रभगवतो मण्डलचक्रं पञ्चरत्नमयपरिघटितदेवतादेवत्यात्मकं चतुरस्रं चतुःशतहस्तायामम्। बाह्ये कायमण्डलं चतुरस्रं चतुर्द्वारं चतुस्तोरणं श्मशानाष्टकविभूषितं पञ्चप्राकारवेष्टितम्।.....कायमण्डलार्धमानमध्ये चतुरस्रं वाङ्मण्डलं चतुरस्रंचतुर्द्वारं चतुस्तोरणभूषितं पञ्चप्राकारवेष्टितम्। वाङ्मण्डलार्धमानं चित्तमण्डलं चतुरस्रं चतुर्द्वारं चतुस्तोरणभूषितं

त्रिःप्राकारवेष्टितम् । तदर्धेन ज्ञानचक्रम्, षोडशस्तम्भोपशोभितम् । एतदर्धेनाष्टदलकमलम् । कमलत्रिभागा कर्णिका । एवं कायवाक्चित्तमण्डलानि सर्वलक्षणपूर्णानि हारार्धहारसंयुक्तानि रत्नपट्टिकावेदिकाबकुलिकासहितानि दर्पणार्धचन्द्रघण्टाविराजितानि । (वि० प्र०, पृ० 26-27)

**महायानमार्गः**

महायानमार्ग इति मञ्जुश्रियो वज्रकुलेन कलशगुह्यप्रज्ञाज्ञानाभिषेकः । (वि० प्र०, पृ० 22)

**महासुखावासः**

धर्मधातुराकाशलक्षणोऽसंकीर्णो धर्मोदयो लोकोपमामतिक्रान्तः समन्तभद्रो महासुखावासः ।
( वि० प्र०, पृ० 16 )

**मारः**

मारो नाम सत्त्वानां संसारचित्तं वासनामलः,''''मारः समलं चित्तम् । (वि० प्र०, पृ० 23)

**मार्गः**

इह खलु त्रिविधो मार्गः—ज्योतिर्मार्गो धूममार्गो विमिश्रमार्गः । एषु अर्चिरध्वा ज्योतिः सूर्यः । धूममार्गो ज्योतिश्चन्द्रः ।''''व्यामिश्रो दिवारात्रिधर्मा । ( वि० प्र०, पृ० 224 )

**मेरुः**

मेरुः शरीरकङ्कालं कटिमारभ्य स्कन्धपर्यन्तमिति नियमः । ( वि० प्र०, पृ० 176 )

**योगः**

न च योगशब्द उपायार्थवाचकः प्रज्ञार्थवाचको वा । योगशब्दः प्रज्ञोपायार्थवाचक इति ।
योगो नोपायकायेन नैकया प्रज्ञया भवेत् । प्रज्ञोपायसमापत्तिर्योग उक्तस्तथागतैः ॥
( वि० प्र०, पृ० 18 )

योगः शून्यताकरुणाभिन्नं विशुद्धतत्त्वं विशुद्धचित्तम् । ( वि० प्र०, पृ० 222 )

प्राणापानयोः परस्परं संयोगो योगः । ( वि० प्र०, पृ० 229 )

योगः पूरकरेचकयोरेकता कुम्भक इति । ( वि० प्र०, पृ० 230 )

**योगतन्त्रम्**

इह योगे शीलमस्यास्तीति योगी, एवं योगिनी च । अतो योगतन्त्रं योगिनीतन्त्रं च भवति । •••तस्मात् प्रज्ञोपायात्मकं तन्त्रं योगतन्त्रम् । ( वि० प्र०, पृ० 18 )

**योगाभ्यासः**

त्रिविधो योगाभ्यासः—बौद्ध आसुरो भौतश्च । तत्र बौद्धो योगः शून्यताकरुणात्मकः । आसुरः कल्पनाधर्मः । भौतिको द्विप्रकारः–शाश्वतरूप उच्छेदरूपश्च ।''''तेषु दिवाभागे

बौद्धयोगिनां ज्ञानोत्पत्तिः। रात्रिभागे आसुरयोगिनाम्। चतुःसन्ध्यारहिते काले भौतयोगिनां ज्ञानोत्पत्तिरिति। (वि० प्र०, पृ० 222)

**योगी**

प्राणापानयोः परस्परं संयोगो योगः, स यस्यास्तीति योगी। (वि० प्र०, पृ० 229)

**लोकोत्तरसत्यम्**

लोकोत्तरसत्यं धूमादिनिमित्तेन निर्विकल्पचित्तेन उत्पन्नक्रमेण महामुद्रासिद्धिसाधनमिति।
(वि० प्र०, पृ० 20

**लौकिकलोकोत्तराभिषेकाः**

लौकिकास्तावद् उदकं मुकुटः पट्टं वज्रघण्टा महाव्रतं नाम अनुज्ञा कलशो गुह्यं प्रज्ञाज्ञानमिति गर्भजानां लोकसंवृत्या दशाभिषेकाः कायवाक्चित्तज्ञानधातुस्कन्धायतनकर्मेन्द्रियादिपरिशुद्ध्येति। लोकोत्तर एकादशतमश्चतुर्थः। तत् पुनस्तथेति नियमान्महामुद्रा-परमाक्षरज्ञानलक्षणो गुरुवक्त्रं कायवागादिनिरावरणत्वेन शोधक इति। (वि० प्र०, पृ० 21)

लौकिकाभिषेकाः—उदक–मुकुट–पट्ट–वज्रघण्टा–महाव्रत–नाम–अनुज्ञा इति सप्त, तयोत्तराः—कलशः, गुह्यः, प्रज्ञाज्ञानमिति। लोकोत्तराभिषेक एकादशमश्चतुर्थ इति।
(वि० प्र०, पृ० 61)

**लौकिकसत्यम्**

लौकिकसत्यं मण्डलचक्रविकल्पभावना लौकिकसिद्धिसाधनमुत्पत्तिक्रमेणेति।
(वि० प्र०, पृ० 20)

**वंकारः**

वंकार–महासुरत–महाराग–सहज–परमाक्षर–बिन्दु–तत्त्व–ज्ञान–विशुद्धचित्तसंज्ञानां मध्ये नैका वंकारसंज्ञा प्रधाना, सर्वासां महामुद्रासहजानन्दाक्षरसुखप्रतिपादकत्वादिति।
(वि० प्र०, पृ० 34)

वं वज्री वज्रसत्त्वश्च वज्रभैरव ईश्वरः।
हेरुकः कालचक्रश्च आदिबुद्धादिनामभिः॥
(वि० प्र०, पृ० 40)

एवं वँकारः पञ्चाक्षरो महाशून्यो निरालम्बकरुणात्मकः परमाणुधर्मतातीतः प्रतिसेनारूपसदृशो योगिगम्य इति। (वि० प्र०, पृ० 48)

**वज्रपदम्**

इह मन्त्रनये द्विधा वज्रपदम्—एकं लौकिकसंवृत्या द्वितीयं परमार्थतः। तयोर्लोकसंवृत्या वज्रपदं मारणादौ समयसिद्धिदायकम्, परमार्थसत्येन वज्रपदं महामुद्रासिद्धिफलदायकमिति।

( वि० प्र०, पृ० 19 )

**वज्रयानम्**

वज्रमभेद्यमच्छेद्यं महदिति। तदेव यानं मन्त्रनयं पारमितानयं फलहेत्वात्मकम्, एकलोलीभूतम्। ( वि० प्र०, पृ० 163 )

**वज्रयोगः**

अस्ति–नास्ति व्यतिक्रान्तो भावाभावक्षयोऽद्वयः।
शून्यताकरुणाभिन्नो वज्रयोगो महासुखः॥
परमाणुधर्मतातीतः शून्यधर्मविवर्जितः।
शाश्वतोच्छेदनिर्मुक्तो वज्रयोगो निरन्वयः॥

( वि० प्र०, पृ० 44 )

षोडशाकारं तत्त्वमिति। स एव सहजकायः शून्यताविमोक्षविशुद्धो ज्ञानवज्रः सर्वज्ञः प्रज्ञोपायात्मको विशुद्धयोग इति। स एव धर्मकायोऽनिमित्तविमोक्षविशुद्धं चित्तवज्रं ज्ञानकायः प्रज्ञोपायात्मको धर्मयोग इत्युक्तः। स एव सम्भोगकायोऽप्रणिहितविमोक्षविशुद्धं वाग्वज्रं दिनकरवपुः प्रज्ञोपायात्मको मन्त्रयोग इत्युक्तः। स एव निर्माणकायोऽनभिसंस्कारविमोक्षविशुद्धं कायवज्रं पद्मपत्रायताक्षः प्रज्ञोपायात्मकः संस्थानयोग इत्युक्तः। एवमेतं वज्रयोगं चतुर्विधं ······· ( वि० प्र०, पृ० 44 )

एष वज्रयोगो ज्ञानपटले विस्तरेण वक्तव्यः।

( वि० प्र०, पृ० 46 )

**वज्रसत्त्वः**

इह पञ्चाक्षरो महाशून्यः स्वरसमूहः शुक्रश्चन्द्र इत्युच्यते, बिन्दुशून्यः षडक्षरो व्यञ्जनसमूहो रजः सूर्य इत्युच्यते। अत्र शुक्रं चन्द्रो वंकारो वज्रम्, रजः सूर्य एकारः पद्मम्। अनयोर्वज्रपद्मयोरेकत्वं वज्रसत्त्व इति। वज्रं परमसुखं ज्ञानं शुक्रम्। सत्त्वः सर्वाकारप्रज्ञाबिम्बं ज्ञेयं रविरिति। ज्ञानविज्ञानाधिष्ठितनिरावरणमेकलोलीभूतं तत्त्वं जगदर्थकारि भवति।

( वि० प्र०, पृ० 49–50 )

**वज्रसिंहासनम्**

वज्रसिंहासनं चन्द्रसूर्याग्निमण्डलमच्छेद्यमभेद्यम्। एकारो वाऽऽकाशधातुर्वज्रसिंहासनम्।

( वि० प्र०, पृ० 16 )

**वरकुलिशधरम्**

वरश्च वरश्च कुलिशधरश्च वरकुलिशधरम्। ""अमी त्रयः शून्यसंज्ञाः स्युः। प्रथमवर-संज्ञया द्वितीयशून्यमुक्तम्। तद्यथा—संस्कारस्कन्धवायुधातुप्राणसंस्पर्शवागिन्द्रियविट्स्रावाः। एषा निरावरणता समरसत्वमेकलोलीभूतत्वं वरमिति द्वितीयाक्षरशून्यम्। अस्य संज्ञाचिह्नं मध्यानाहतचिह्नात् पूर्वेण दण्डाकारं रेखामात्रमनुच्चार्यमिति। द्वितीयवरसंज्ञया पञ्चमं शून्यमित्युक्तम्, तद्यथा—रूपस्कन्ध-पृथिवीधातु-कायेन्द्रिय-गन्धपाय्वालापाः। एषां निरावरणता समरसत्वमेकलोलीभूतत्वं वरमिति पञ्चमाक्षरशून्यम्। अस्य संज्ञाचिह्नं मध्यानाहतचिह्नात् पश्चिमेन हलाकृतिमनुच्चार्यमिति। एवमुक्तक्रमेण पञ्चाक्षरो महाशून्यो वँकारो वज्रसत्त्वो महासुखकुलिशमुच्यते। [ कुलिशधरशब्दोऽपि द्रष्टव्यः ]

( वि० प्र०, पृ० 48 )

**विद्या**

इह संसारे लोकव्यवहारे विद्या या, परमार्थतत्त्वविषयेऽविद्या सा। विद्येत्यविकल्पिताध्यात्म-विद्या शून्यता सर्वाकारैरुपेता,''''विद्या अनालम्बिनी अनास्रवसुखात्मिकेति। विद्या हेतुफला-त्मिका हेतुफलैकलोलीभूता अग्निप्रभा दहनैकलोलीभूतवदिति। ( वि० प्र०, पृ० 221 )

विद्येत्यानन्दादिकामतत्त्वम्। ( वि० प्र०, पृ० 258 )

**वीरक्रमः**

वीरक्रमो न बाह्ये देहे प्राणक्षयो ह्यसावुक्तः। ( वि० प्र०, पृ० 7 )

**शक्तिचतुष्टयम्**

इच्छाशक्तिः क्रिया या स्वमनसि जगतो ज्ञानशक्तिस्तृतीया
भावालोकं प्रवेशं समरसकरणेऽर्थोपलब्धिं करोति।
भूयस्त्यागं चतुर्थी त्रिभुवननमिता चाज्ञया वै क्रमेण
तासां मध्ये न किञ्चिद् ग्रसति नरपते मुञ्चते नैव वज्री॥

( का० 2.90 )

चित्तशक्तयोऽत्र जाग्रत्स्वप्नसुषुप्तितुर्यालक्षणाः। ( वि० प्र०, पृ० 219 )

**शिवत्वम्**

इह शुक्रबिन्दोर्भेदं च्यवनसुखावस्थालक्षणम्, तदेव शिवत्वम्। ( वि० प्र०, पृ० 258 )

**शून्यम्**

ज्ञानस्कन्धविज्ञानस्कन्धज्ञानधात्वाकाशधातुमनःश्रोत्रशब्दधर्मधातु-दिव्येन्द्रियभगमूत्रस्रावशुक्र-

च्युतिश्च। एषां निरावरणता समरसत्वमेकलोलीभूतत्वं शून्यमित्युच्यते, न सर्वाभाव इति, योगिस्वसंवेद्यत्वात्। तदेवानाहतमुक्तं जिनैः। अस्यानाहतस्य संज्ञाचिह्नं सव्यवामपूर्वापरमध्ये कर्तिकाकारं रेखामात्रमनुच्चार्यं प्रथमाक्षरमहाशून्यमिति। (वि० प्र०, पृ० 4)

**षट्कर्मेन्द्रियाणि**

षोडशवर्षान्ते ज्ञानधातौ दिव्येन्द्रियं भवतीति षट्कर्मेन्द्रियनियमः। (वि० प्र०, पृ० 168)

**षट्कुलानि**

अक्षरसुखं ज्ञानधातुः, विज्ञानमाकाशधातुः, संस्कारो वायुधातुः, वेदना तेजोधातुः, संज्ञा तोयधातुः, रूपं पृथ्वीधातुरिति गर्भजानां सावरणानि, बुद्धानां निरावरणानीति।

(वि० प्र०, पृ० 20)

एते धातवः षडिन्द्रियाणां षट् कुलानीति। एवं कायवाक्चित्तकुलानि स्वभावकुलेन सार्धं चतुःकुलानि भवन्ति। कायत्रयं कायचतुष्कं भवति, अवस्थात्रयमवस्थाचतुष्कं भवति, एवं पञ्च धातुकुलानि ज्ञानधातुना सह षट् कुलानि भवन्ति, तथा पञ्च स्कन्धकुलानि ज्ञानस्कन्धेन सार्धं षट् कुलानि भवन्ति गर्भजानामिति। कन्याया द्वादशाब्दैः, पुंसः षोडशाब्दैः। कन्यायाः रजःकालं यावत् त्रिकुलं पञ्चकुलं वेदितव्यम्। पुरुषस्य शुक्रच्युतिकालं यावत् त्रिकुलं पञ्चकुलं वेदितव्यम्। ज्ञानधातूद्भवकाले उभयोश्चतुःकुलं षट्कुलमामरणादिति। तथा मूलतन्त्रे भगवानाह—

"त्रिकुलं पञ्चकुलं चैव स्वभावैकं शतं कुलम्" इति। (वि० प्र०, पृ० 50)

**षट्चक्राणि**

उष्णीषः शून्यधातौ भवति सुरनृणां ज्ञानधातौ च गुह्यं
हृत्पद्मं वायुधातौ प्रकटशिखिनि वै कण्ठचक्रं स्फुरद्धि।
तोये भ्रूमध्यपद्मं वसुवसुदलकं नाभिचक्रं च भूम्यां
षट्सन्धिः पादपाण्योर्महिजलहुतभुङ्मारुतेषु त्रिसंख्या॥

(का० 2.25)

द्वादश चक्राणि वक्ष्यमाणे वक्तव्यानीत्यष्टादशचक्रनियमः। (वि० प्र०, पृ० 169)

गुह्योष्णीषे च नाभौ सहजजिनतनुर्निःस्वभावस्वभावा
हृच्चक्रे धर्मकायो भवति हि नृप सम्भोगचक्रे जिनस्य।
बिन्दौ निर्माणकायो भवति गुणवशाच्चाधिदैवक्रमेण
हृच्चक्रं कण्ठचक्रं शिरसि च कमलं धर्मसम्भोगशुद्धम्॥ (का० 2.27)

नाभौ कण्ठे च गुह्ये शिरसि च हृदये तद्वदुष्णीषमध्ये
मातुर्भर्तुः क्रमेण त्रिविधमपि भवेत् कायवाक्चित्तवज्रम्।
चक्रं रत्नं खपद्मं जलजमसिवरं षट्कुलं वज्रयुक्तं
तान्यूर्ध्वासंख्निनाड्यस्त्रिविधपथगताश्चन्द्रसूर्याग्निभेदैः ॥ (का० 2.38)

**षट्चित्तविकाराः**

मात्सर्यं ज्ञानधातौ भवति वरतनौ चाम्बरे द्वेषचित्तम्
ईर्ष्याचित्तं हि वायौ प्रकटितमनले रागचित्तं तथैव।
तोये श्रीमानचित्तं प्रकृतिगुणवशान्मोहचित्तं धरण्यां
(का० 2.23)

**षट्त्रिंशद्धातवः स्कन्धाश्च**

कायभेदेन स्कन्धेन्द्रिया ह्रस्वस्वरव्यञ्जनधर्माः, धातुविषया दीर्घस्वरव्यञ्जनधर्माः। षड् रसा धातुविकारभेदेन षड्त्रिंशद् धातवो भवन्ति, षट् स्कन्धाः षडिन्द्रियादिभेदेन षट्त्रिंशत् स्कन्धा भवन्ति। तद्यथा षड् रसाः, षड् धातवः, षडिन्द्रियाणि, षड् विषयाः, षट् कर्मेन्द्रियाणि, षट् कर्मेन्द्रियविषया इति षड् रसधातुविकाराः। श्रोत्रविज्ञानादिषड्विज्ञानानि। एवं षट् संस्काराः, षड् वेदनाः, षट् संज्ञाः, षड् रूपस्कन्धाः, षड् ज्ञानस्कन्धा इति स्कन्धविकाराः।

(वि० प्र०, पृ० 49)

**षड्गतिः**

नरक-प्रेत–तिर्यक्-मनुष्य–असुरदेवानां गतिः षड्गतिः। (वि० प्र०, पृ० 156)

**षण्मुद्राः**

चक्री कुण्डलं कण्ठिका रुचकं मेखला भस्म यज्ञोपवीतमिति (षण्मुद्राः) (वि० प्र०, पृ० 186)

**षोडश करुणाः**

करुणा त्रिधा—सत्त्वावलम्बिनी, धर्मावलम्बिनी, अनवलम्बिनी चेति। तत्र सत्त्वावलम्बिनी शुक्लप्रतिपदाद्याः पञ्च तिथयः। धर्मावलम्बिनी षष्ठ्याद्याः पञ्च तिथयः। अनवलम्बिनी एकादश्याद्याः पञ्च तिथयः पूर्णिमापर्यन्तम्। पूर्णिमान्तकृष्णप्रतिपत्प्रवेशयोर्मध्ये षोडशी करुणा। (वि० प्र०, पृ० 21)

**षोडशतत्त्वानि**

निर्माणकायो निर्माणवाग् निर्माणचित्तं निर्माणज्ञानम्, सम्भोगकायः सम्भोगवाक् सम्भोग-

चित्तं सम्भोगज्ञानम्, धर्मकायो धर्मवाग् धर्मचित्तं धर्मज्ञानम्, सहजकायः सहजवाक् सहज-चित्तं सहजज्ञानमित्यानन्द-परम-विरम-सहजभेदेन षोडश तत्त्वानि । गर्भजानां सावरणानि षोडशार्द्धार्द्धबिन्दुमोचनत्वादिति । बुद्धानां निरावरणानि षोडशार्द्धार्द्धबिन्दुधरत्वादिति ।
( (वि० प्र०, पृ० 20-21 )

**षोडशशून्यताः**

कृष्णपक्षः सूर्यः प्रज्ञा ।........शून्यतायास्त्रयो भेदाः—शून्यता, महाशून्यता, परमार्थशून्यता चेति । तत्र शून्यता पञ्चस्कन्धशून्यता कृष्णप्रतिपदाद्याः पञ्चतिथयः । महाशून्यता पञ्चधातुशून्यता षष्ठयाद्याः पञ्च तिथयः । परमार्थशून्यता पञ्चेन्द्रियशून्यता एकादश्याद्याः पञ्च तिथयः । तेन पञ्चदश तिथयः पञ्चदशशून्यता अमापर्यन्तम् । अमान्तशुक्लप्रतिपत्-प्रवेशयोर्मध्ये षोडशी शून्यता सर्वाकारा । (वि० प्र०, पृ० 21 )

**सहजकायः**

स एव भगवान् मन्त्रनये फललक्षणे सहजानन्दः सहजकाय इत्युक्तो ग्राह्यग्राहकवर्जितो विज्ञानधर्मतातीतो भवनिर्वाणाप्रतिष्ठितो बुद्धानां समाजो देवीनां संवरश्च । (वि०प्र०, पृ० 43

**सुचन्द्रः**

वज्रयानेऽडकवतीनिवासो महायक्षाधिपतिर्महाबोधिसत्त्वो वज्रपाणिस्तथागतस्याध्येषकः संगीतिकारश्च । कथं सम्भलविषयकलापग्रामाधिपतेः सूर्यप्रभस्य विजयादेवीगर्भसम्भूतः सुचन्द्रो राजाध्येषकः । ( वि० प्र०, पृ० 22-24 )

**सूर्यः**

सूर्यशब्देन प्राणवायुः । ( वि० प्र०, पृ० 196 )

अत्रेडापिङ्गलासुषुम्नानामधिपतिः प्राणः सूर्यो नाभेरूर्ध्वं प्रवाहतः । ( वि० प्र०, पृ० 196 )

**स्वाधिष्ठानम्**

स्वाधिष्ठानं शून्ये त्रैधातुकदर्शनं नाम । ( वि० प्र०, पृ० 7 )

———

# इन्द्रिय : वर्गीकरण एवं व्याख्या

—डॉ० करुणाशंकर दुबे—

[ बौद्ध पालि वाङ्मय में इन्द्रिय शब्द की परिभाषा क्या है ? इसका इन्द्र शब्द से क्या सम्बन्ध है ? इन्द्रियों की संख्या कितनी है और प्रमुख इन्द्रियाँ कौन हैं ? उनके क्या लक्षण हैं ? आदि प्रश्नों के उत्तर यहाँ विविध ग्रन्थों से संकलित कर दर्शाये गये हैं। बौद्धेतर ग्रन्थों में प्रयुक्त निर्वचनों का भी दिग्दर्शन कराया गया है। ]

अपने शोध कार्य में मुझे देवताओं के अधिपति इन्द्र से सम्बद्ध अनेक पदों के अध्ययन का अवसर मिला, 'इन्द्र' की सर्वश्रेष्ठ धारणा वेदाङ्ग साहित्य निरुक्त में मिली। वहां इन्द्र पद की तेरह व्याख्याएँ उपलब्ध हैं। यथा—इरां दृणाति, इरां ददाति, इरां दधाति, इरां दारयते, इन्दवे द्रवति, इन्दौ रमते, इन्धे भूतानि, इदं करणादित्याग्रायणः, इदं दर्शनादित्यौपमन्यवः, इन्दवे चैश्वर्य-कर्मणः, इन्दं शत्रूणां द्रावयिता वा, आदरयिता च यज्वनाम्। ( निरुक्त 10.8 )

उक्त प्रसंगों को देखने के बाद यह विचार हुआ कि यह 'इन्द्र' कहीं इन्द्रिय से सम्बद्ध तो नहीं, जैसा कि वामन शिवराम आप्टे ने अपने शब्दकोश में इन्द्र से सम्बद्ध गुणों को इन्द्रिय कहा है। अथवा यह भी सम्भव है कि इन्द्र शब्द = इन्द् + रन् से उत्पन्न है और इन्द्रिय शब्द इन्द्र + घ से; जो थोड़े बहुत रूप में इन्द्र से कहीं न कहीं सम्बन्ध अवश्य रखता है। तिब्बती भाषा में भी (दबङ्-पो) इन्द्र और इन्द्रिय दोनों पदों के लिए प्रयुक्त होता है, किन्तु बौद्ध-साहित्य में इन्द्रिय शब्द का अर्थ इन्द्र से सम्बद्ध नहीं है, इन्द्रिय के विषय में कहा गया है—

"इदि परमैश्वर्ये। तस्य इन्दन्तीति इन्द्रियाणि।
अत आधिपत्यार्थ इन्द्रियार्थः"[1]।

यहाँ 'इदि' धातु का अर्थ 'परमैश्वर्य' है। जिसको परमैश्वर्य की प्रवृत्ति होती है, वह 'इन्द्रिय' कहलाती है। इसलिए सामान्यतः 'इन्द्रिय' का अर्थ अधिपति है। इसी सन्दर्भ में विवरण है—"इन्दन्तीन्द्रियाणि, स्व-विषये आधिपत्यं कुर्वन्तीत्यर्थः।" ( अर्थविनिश्चयसूत्रनिबन्धन, पृ० 170 )

1. अभिधर्मकोशभाष्य 2.1, पृ० 135. सम्पा० स्वामी द्वारिकादास शास्त्री।

इन्द्रियां कितने प्रकार की हैं ? इस विषय में अनेकानेक विवरण देखने को मिलते हैं। ब्राह्मण ग्रन्थों में इसके ज्ञानेन्द्रिय और कर्मेन्द्रिय नामक दो विभाग हैं। ज्ञानेन्द्रिय को बुद्धीन्द्रिय भी कहा गया है। मनुस्मृति में ज्ञानेन्द्रिय श्रोत्र, त्वक्, चक्षुस्, जिह्वा, नासिका और कर्मेन्द्रिय पायु, उपस्थ, हस्त, पाद, वाक् को कहा गया है ( मनु० 2.9 )। किन्तु सांख्यदर्शनकार इनके अतिरिक्त मन को भी ग्यारहवीं इन्द्रिय मानते हैं, जो उभयात्मक है। बौद्ध साहित्य में भी अनेकानेक वर्गीकरणों की चर्चा है। 'अभिधर्मकोश' में तीक्ष्ण, मध्य एवं मृदु इन्द्रियों की चर्चा है। इतिवुत्तक के अनुसार तीन और इन्द्रियाँ हैं—

"तीणिमानि भिक्खवे इन्द्रियानि अनञ्ञातञ्ञस्सामीतिन्द्रियं अञ्ञिन्द्रियं अञ्ञताविन्द्रियं।

( खुद्दकनिपात, इतिवुत्तक 218 )

अन्यत्र चार प्रकार की इन्द्रियों की चर्चा है। यथा—

चत्तारिमानि इन्द्रियानि सद्धिन्द्रिय, विरियिद्रिय, सतिन्द्रिय, समाधिन्द्रिय।

( अंगुत्तरनिकाय II, 149 )

प्रज्ञेन्द्रिय के साथ पांच प्रकार की इन्द्रियां होती हैं—

पञ्चिमानि इन्द्रियानि—सद्धिन्द्रियं, विरियिन्द्रियं, सतिन्द्रियं, समाधिन्द्रियं, पञ्ञिन्द्रियं।

( संयुत्तनिकाय, भा० 5, पृ० 167 )

संस्कृत एवं पालि स्रोतों में कुल बाईस प्रकार की इन्द्रियों का विवरण मिलता है—

चक्षुरिन्द्रियं, श्रोत्रेन्द्रियम्, घ्राणेन्द्रियम्, जिह्वेन्द्रियम्, कायेन्द्रियम्, मनइन्द्रियम्, स्त्रीन्द्रियम्, पुरुषेन्द्रियम्, जीवितेन्द्रियम्, दुःखेन्द्रियम्, दौर्मनस्येन्द्रियम्, सुखेन्द्रियम्, सौमनस्येन्द्रियम्, उपेक्षेन्द्रियम्, श्रद्धेन्द्रियम्, वीर्येन्द्रियम्, स्मृतीन्द्रियम्, समाधीन्द्रियम्, प्रज्ञेन्द्रियम्, अनासातमाज्ञास्यामीन्द्रियम्, आज्ञेन्द्रियम्, आज्ञातावीन्द्रियम्। ( अभिधर्मसमुच्चय, 16 )

बावीसतिन्द्रियानि–चक्खुन्द्रियं, सोतिन्द्रियं, घानिन्द्रियं, जिह्विन्द्रियं, कायिन्द्रियं, मनिन्द्रियं, इत्थिन्द्रियं, पुरिसिन्द्रियं, जीवितिन्द्रियं, सुखिन्द्रियं, दुःखिन्द्रियं, सोमनस्सिन्द्रियं, दोमनस्सिन्द्रियं, उपेक्खिन्द्रियं, सद्धिन्द्रियं, वीरियिन्द्रियं, सतिन्द्रियं, समाधिन्द्रियं, पञ्ञिन्द्रियं, अनञ्ञातञ्ञस्सामीतिन्द्रियं, अञ्ञिन्द्रियं, अनञ्ञाताविन्द्रियं' ति।

( विसुद्धिमग्ग, भा० 3, पृ० 1103 )

इन 22 इन्द्रियों में से यहाँ मुख्य रूप से पालि एवं संस्कृत बौद्ध ग्रन्थों के अनुसार समाधि, श्रद्धा, वीर्य, स्मृति और प्रज्ञा नामक पांच प्रमुख इन्द्रियों की व्याख्या प्रस्तुत की जा रही है। पहले जिस शब्द के साथ इन्द्रिय पद जुड़ा हुआ है, उसकी व्याख्या, तत्पश्चात् इन्द्रिय के रूप में उस शब्द की व्याख्या दिखाई गई है।

## समाधि और समाधीन्द्रिय

### समाधि

भन्ते नागसेन किंलक्खणो समाधि' ति। पमुखलक्खणो महाराज समाधि। ये केचि कुसला धम्मा सब्बे ते समाधिप्पमुखा होन्ति समाधिनिन्ना समाधिपोणा समाधिपब्भारा' ति।

( मिलिन्दप्रश्न, 40 )

समाधिज्झान कोविदो एत्थ समाधि ति चित्तं समं आदहति आरम्मणे ठपेती ति समाधि।

( मधुरत्थविलासिनी, बुद्धवंस-अट्ठकथा, पृ० 44 )

### समाधीन्द्रिय

यान् धर्मान् स्मृतीन्द्रियेण न विप्रणाशयति, तान् धर्मान् समाधीन्द्रियेण एकाग्रीकरोति।

( अर्थविनिश्चयसूत्र, 32 )

या तस्मिं समये चित्तस्स ठिति सण्ठिति अवट्ठिति अविसाहारो अविक्खेपो अविसाहटमानसता समथो समाधिन्द्रियं समाधिबलं सम्मासमाधि–इदं तस्मिं समये समाधिन्द्रियं होति।

( धम्मसङ्गणि, पृ० 20, एवं विभंग, पृ० 159 )

इध भिक्खवे अरियसावको, वोसग्गारम्मणं करित्वा लभति समाधिं लभति चित्तस्स एकग्गतं सो विविच्चेव कामेहि विविच्च अकुसलेहि धम्मेहि सवितक्कं सविचारं विवेकजं पीतिसुखं पठमं झानं उपसम्पज्ज विहरति वितक्क विचारानं वूपसमा अज्झत्तं सम्पसादनं चेतसो एकोदिभावं अवितक्कं अविचारं समाधिजं पीतिसुखं। दुतियझानं उपसम्पज्ज विहरति। पीतिया च विरागा उपेक्खको च विहरति सतो च सम्पजानो सुखं च कामेन पटिसंवेदेति यं तं अरिया आचिक्खन्ति उपेक्खको सति मा सुखविहारी' ति ततियझानं उपसम्पज्ज विहरति। सुखस्स च पहाना दुक्खस्स च पहाना पुब्बेव सोमनस्सदोमनस्सानं अत्थङ्गमा अदुक्खमसुखं उपेक्खासति, पारिसुद्धिं चतुत्थं झानं उपसम्पज्ज विहरति–इदं वुच्चति भिक्खवे समाधिन्द्रियं। ( संयुत्तनिकाय, भा० 5, पृ० 171 )

## श्रद्धा और श्रद्धेन्द्रिय

### श्रद्धा

श्रद्धा चेतसः प्रसादः। ( अर्थविनिश्चयसूत्र, 175 )

अस्तित्वगुणवत्त्वशक्तत्वेष्वभिसंप्रत्ययः प्रसादोऽभिलाषः। छन्दसन्निश्रयदानकर्मिका।

( अभिधर्मसमुच्चय, 6 )

सद्दहन्ति एताय सयं वा सद्दहति सद्दहन मत्तमेव वा एसा' ति सद्धा। ( विसुद्धिमग्ग, 1037 )

**श्रद्धेन्द्रिय**

यया श्रद्धया चतुरो धर्मान् श्रद्दधाति। कतमांश्चतुरः? संसारावचरां लौकिकीं सम्यग्दृष्टिं श्रद्दधाति, स कर्मविपाकप्रतिशरणो भवति। यद्यदेव कर्म करिष्यामि कल्याणं वा पापकं वा तस्यैव कर्मणो विपाकं प्रतिसंवेदयिष्यामि। स जीवितहेतोरपि पापकं कर्म नाभिसंस्करोति। ( अर्थविनिश्चयसूत्र, 31 )

या सद्धा सद्दहना ओकप्पन्ना अभिप्पसादो सद्धा सद्धिन्द्रियं सद्धाबलं–इदं वुच्चति सद्धिन्द्रियं।

( विभंग–158, एवं धर्मसंगणि–20 )

इध भिक्खवे अरिय सावको सद्धो होति, सद्दहति तथागतस्स बोधिं इति पि सो भगवा अरहं सम्मासम्बुद्धो विज्जाचरणसम्पन्नो सुगतो लोकविदू अनुत्तरो पुरिसदम्म सारथि सत्था देवमनुस्सानं बुद्धो भगवा–ति इदं वुच्चति, भिक्खवे सद्धिन्द्रियं।

( संयुत्तनिकाय, भा० 5, पृ० 170 )

## वीर्य और वीर्येन्द्रिय

**वीर्य**

वीर्यं कुशले वस्तुन्युत्साहः। ( अर्थविनिश्चयसूत्र, 175 )

वीर्यं चेतसोऽभ्युत्साहः। ( अभिधर्मकोश, 191 )

भन्ते नागसेन किं लक्खणं विरियं ति। उपत्थम्भनलक्खणं महाराज विरियं। विरियुपत्थम्भिता सब्बे कुसला धम्मा न परिहायन्ती' ति। ( मिलिन्दप्रश्न–38 )

**वीर्येन्द्रिय**

यान् धर्मान् श्रद्धेन्द्रियेण श्रद्दधाति, तान् धर्मान् वीर्येन्द्रियेण समुदानयति, इदमुच्यते वीर्येन्द्रियम्। ( अर्थविनिश्चयसूत्र, 3' )

यो तस्मिं समये चेतसिको विरियारम्भो निक्कमो परक्कमो उय्यामो वायामो उस्साहो उस्सोळ्ही थामो धिति असिथिलपरक्कमता अनिक्खित्तछन्दता अनिक्खित्तधुरता धुरसम्पग्गाहो विरियं विरियिन्द्रियं विरियबलं सम्मावायामो–इदं तस्मिं समये विरियिन्द्रियं होति।

( धम्मसंगणि–20, एवं विभंग 158 )

इध भिक्खवे अरियसावको, आरद्धविरियो, विहरति अकुसलानं धम्मानं पहानाय कुसलानं धम्मानं उपसम्पदाय, थामवा दळ्हपरक्कमो अनिक्खित्तधुरो कुसलेसु धम्मेसु। सो अनुप्पन्नानं पापकानं अकुसलानं धम्मानं अनुप्पादाय छन्दं जनेति वायमति विरियं आरभति चित्तं पग्गण्हाति पदहति, उप्पन्नानं पापकानं अकुसलानं धम्मानं पहानाय छन्दं जनेति वायमति विरियं आरभति चित्तं पग्गण्हाति पदहति, अनुप्पन्नानं कुसलानं धम्मानं, उप्पादाय छन्दं जनेति

वायमति विरियं आरभति चित्तं पग्गण्हाति पदहति, उप्पन्नानं कुसलानं धम्मानं ठितिया असम्मोसाय भिय्योभावाय वेपुल्लाय भावनाय पारिपूरिया छन्दं जनेति वायमति विरियं आरभति चित्तं पग्गण्हाति पदहति–इदं वुच्चति भिक्खवे विरियिन्द्रियं ।

( संयुत्तनिकाय, भा० 5, पृ० 170-171 )

## स्मृति और स्मृतीन्द्रिय

### स्मृति

स्मृतिरनुभूतार्थाभिलपनता । ( अर्थविनिश्चयसूत्र–175-176 )

तस्मिं समये सति अनुस्सति पटिस्सति सति सरणता धारणता अपिलापनता असम्मुसनता सति सतिन्द्रियं सतिबलं सम्मासति-अयं तस्मिं समये सति होति । ( धम्मसंगणि–26 )

अपिलापनलक्खणा महाराज सति, उपग्गण्हनलक्खणा चा ति । ( मिलिन्दप्रश्न–39 )

### स्मृतीन्द्रिय

यान् धर्मान् वीर्येन्द्रियेण समुदानयति, तान् धर्मान् स्मृतीन्द्रियेण न विप्रणाशयति ।

( अर्थविनिश्चयसूत्र–32 )

या सति अनुस्सति पटिस्सति सति सरणता धारणता अपिलापनता असम्मुस्सनता सति सतिन्द्रियबलं सतिबलं सम्मासति–इदं वुच्चति सतिन्द्रियं ।"

( विभंग-159 एवं धम्मसंगणि–20 )

इध भिक्खवे अरियसावको सतिमा होति परमेन सतिनेपक्केन समन्नागतो, चिरकतं पि चिरभासितं पि सरिता अनुस्सरिता । सो काये कायानुपस्सी विहरति आतापी सम्पजानो सतिमा, विनेय्यलोके अभिज्झा दोमनस्सं वेदनासु ... पे० ... धम्मे धम्मानुपस्सी विहरति आतापी सम्पजानो सतिमा विनेय्य लोके अभिज्झा दोमनस्सं–इदं वुच्चति भिक्खवे सतिन्द्रियं । ( संयुत्तनिकाय, भा० 5, पृ० 171 )

## प्रज्ञा और प्रज्ञेन्द्रिय

### प्रज्ञा

प्रज्ञा धर्मप्रविचयः । ( अर्थविनिश्चयसूत्र–176 )

.... छेदनलक्खणा पञ्ञा ति । अपि च ओभासनलक्खणा पञ्ञा'ति । ( मिलिन्दप्रश्न–41 )

### प्रज्ञेन्द्रिय

यान् धर्मान् समाधीन्द्रियेण एकाग्रीकरोति, तान् धर्मान् प्रज्ञेन्द्रियेण प्रतिविध्यते । स तेषु धर्मेषु प्रत्यवेक्षणजातीयो भवति । इदमुच्यते प्रज्ञेन्द्रियम् । ( अर्थविनिश्चयसूत्र–32-33 )

या तस्मि समये पञ्ञा पजानना विचयो पविचयो धम्मविचयो सल्लक्खणा उपलक्खणा पच्चुपलक्खा पण्डिच्चं कोसल्लं नेपुञ्ञं वेभब्या चिन्ता उपपरिक्खा भूरी मेधा परिणायिका विपस्सना सम्पजञ्ञं पतोदो पञ्ञा पञ्ञिन्द्रियं पञ्ञाबलं पञ्ञासत्थं पञ्ञापासादो पञ्ञा आलोको पञ्ञाओभासो पञ्ञापज्जोतो पञ्ञारतनं अमोहो धम्मविचयो सम्मादिट्ठि–इदं तस्मि समये पञ्ञिन्द्रियं होति। ( धम्मसंगणि–20-21 )

इध भिक्खवे अरियसावको पञ्ञवा होति, उदयत्थगामिनिया पञ्ञाय समन्नागतो अरियाय निब्बेधिकाय सम्मादुक्खक्खयगामिनिया सो 'इदं दुक्खं' ति यथाभूतं पजानाति, 'अयं दुक्खसमुदयो' ति यथाभूतं पजानाति, 'अयं दुक्खनिरोधो' ति यथाभूतं पजानाति। इयं 'दुक्खनिरोधगामिनी पटिपदा' ति यथाभूतं पजानाति-इदं वुच्चति भिक्खवे पञ्ञिन्द्रियं।

( संयुत्तनिकाय, भा० 5, पृ० 171-172 )

———

# बौद्ध ग्रन्थों में 'भगवान्' शब्द की व्याख्या

— डॉ० लाल जी —

[ बुद्ध के लिये पालि एवं संस्कृत ग्रन्थों में 'भगवान्' ( पालि-भगवा ) यह विशेषण सर्वाधिक प्रयुक्त हुआ है। बौद्ध ग्रन्थों में इस शब्द का प्रयोग किस-किस अर्थ में किया गया है और इसकी निरुक्ति क्या है ? इसे विभिन्न ग्रन्थों से इस निबन्ध में संकलित किया गया है। ]

बुद्ध के लिये पालि एवं बौद्ध संस्कृत-ग्रन्थों में जिस विशेषण का सर्वाधिक प्रयोग हुआ है, वह है 'भगवान्' ( पालि 'भगवा' )। इधर प्राचीन भारतीय ग्रन्थों में भी 'भगवान्' शब्द प्रयुक्त हुआ है। जैन और ब्राह्मण धर्म में भी अवतारी पुरुष एवं महापुरुषों के लिये इस शब्द का प्रयोग हुआ है। अतः यह आवश्यक है कि बौद्ध ग्रन्थों में इस शब्द का प्रयोग किस अर्थ में किया गया है, इसे जान लें। इस लघु निबन्ध में बौद्ध संस्कृत-ग्रन्थों एवं पालि-ग्रन्थों में प्राप्त 'भगवान्' शब्द की व्याख्या को संकलित किया गया है ।

## ( अ ) बौद्ध संस्कृत-ग्रन्थों में

**1. मार-विजेता के अर्थ में ( मार-भञ्जक के रूप में )**

भगवानिति। मारचतुष्टयं देवपुत्रक्लेशस्कन्धमृत्युलक्षणं भग्नवानिति कृत्वा नैरुक्तेन न्यायेन भगवान्। ( अ० सू० नि०, पृ० 76-77 )

चतुर्मारजयाज्जिनो **भगवान्**, पापधर्मजयाद्वा। ( बो० च० 9.36, पृ० 199 )

तत्र भगवानित्यनेन विबन्धभङ्गं दर्शयति, भग्नवानिति कृत्वा नैरुक्तेन विधिना भगवान्।
( अ० सू० वि०, पृ० 241-242 )

क्लेशकर्म तथा जन्मक्लेशज्ञेयावृती तथा।
येन वैपक्षिका भग्नास्तेनेह भगवान् स्मृतः॥

इत्यार्षोक्त्या नैरुक्तविधानेन क्लेशादिकं भग्नवानिति भगवान्। ( अ० प्र०, पृ० 272 )

**2. 'भग' शब्द ऐश्वर्यादि 6 गुणों का द्योतक**

भगवान् में दो शब्द हैं—'भग' और 'वान्'। 'वान्' शब्द धारणकर्ता के अर्थ में है तथा 'भग' शब्द ऐश्वर्यादि 6 गुणों के अर्थ में है। यथा—

ऐश्वर्यादिगुणयोगाद्वा, यथोक्तम्--

ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः।
ज्ञानस्याथ प्रयत्नस्य षण्णां भग इति श्रुतिः ॥

( अ० सू० नि०, पृ० 77; अ० प्र०, पृ० 272 )

## ( आ ) पालि-ग्रन्थों में

### 1. गुणविशेष का द्योतक

भगवान् ( पालि 'भगवा' ) शब्द गुणविशेष, उत्तमता, गुरुता, गौरवता का अधिवचन है-- **भगवा** हि इदं पनस्स गुणविसिट्ठसब्बसत्तुत्तमगरुगारवाधिवचनं। तेनाहु पोराणा—

भगवा ति वचनं सेट्ठं भगवा ति वचनमुत्तमं।
गरुगारवयुत्तो सो **भगवा** तेन वुच्चती' ति ॥

( विसु०, पृ० 450-451; सुम०, भा० 1, पृ० 44)

### 2. बुद्ध का नैमित्तिक नाम

भगवा' ति नेतं नाम मातरा कतं, न पितरा कतं, न भातरा कतं, न भगिनिया कतं, न मित्तामच्चेहि कतं, न ञातिसालोहितेहि कतं, न समणब्राह्मणेहि कतं, न देवताहि कतं। विमोक्खन्तिकमेतं बुद्धानं भगवन्तानं बोधिया मूले सह सब्बञ्ञुतञाणस्स पटिलाभा सच्छिका पञ्ञत्ति यदिदं **भगवा** ति। ( विसु० 452; म० निद्देस, पृ० 119-120 )

### 3. नैमित्तिक नाम के कारण

यं गुणनेमित्तिकञ्चेतं नाम, तेसं गुणानं पकासनत्थं इमं गाथं वदन्ति—

भगी भजी भागि विभत्तवा इति
अकासि भग्गं ति गरु ति भाग्यवा।
बहूहि ञायेहि सुभावितत्तनो
भवन्तगो सो **भगवा** ति वुच्चतो ति ॥ ( विसु० 452 )

### 4. 'भगवान्' शब्द की निरुक्ति

'भगवान्' शब्द भाग्यवान्, भग्नवान्, भगवान्, विभक्तवान्, भक्तवान् से निष्पन्न हुआ है।

भाग्यवा भग्गवा वुत्तो भगेहि च विभत्तवा।
भत्तवा वन्तगमनो भवेसु **भगवा** ततो ति ॥

( विसु० 453; सुम० भा० 1, 44 )

**( क ) भाग्यवान् ( कुशलता ) के अर्थ में**

यस्मा लोकियलोकुत्तरसुखाभिनिब्बत्तकं दानसीलादिपारप्पत्तं भाग्यमस्स अत्थि, तस्मा भाग्यवा ति वत्तब्बे **भगवा** ति वुच्चती ति ञातब्बं । ( विसु० 454 )

**( ख ) क्लेश स्कन्धों के भञ्जन के अर्थ में**

यस्मा पन लोभदोसमोहविपरीतमनसिकारअहिरीकानोत्तप्प ''' परिळाहकिलेससत्तसहस्सानि सङ्खेपतो वा पञ्चकिलेसखन्धअभिसङ्खारदेवपुत्तमच्चुमारे अभञ्जि तस्मा भग्गत्ता एतेसं परिस्सयानं भग्गवा ति वत्तब्बे **भगवा** ति वुच्चति । ( विसु० 455 )

**( ग ) ऐश्वर्यादि के अर्थ में**

यस्मा च लोके इस्सरियधम्मयससिरिकामपयत्तेसु छसु धम्मेसु भगसद्दो पवत्तति; ''' तस्मा इमेहि भगेहि युत्तत्ता पि भग्ग अस्स सन्ती ति इमिना अत्थेन भगवाति वुच्चति ।

( विसु० 457 )

**( घ ) धर्म-विभाजनकर्ता के अर्थ में**

यस्मा पन कुलादीहि भेदेहि सब्बधम्मे, खन्धायतनधातुसच्चइन्द्रियपटिच्चसमुप्पादादोहि वा कुसलादिधम्मे, पीळनसङ्खतसन्तापविपरिणाम-कट्ठेन वा दुक्खं अरियसच्चं, आयूहननिदान-संयोगपटिबोधट्ठेन समुदयं, निस्सरणविवेकासङ्खतअमतट्ठेन निरोधं, निय्यानिकहेतुदस्सनाधि-पतेय्यट्ठेन मग्गं विभत्तवा, विभजित्वा विवरित्वा देसित वा ति वुत्तं होति–तस्मा विभत्तवा ति वत्तब्बे **भगवा** ति वुच्चति । ( विसु० 458 )

**( च ) श्रेष्ठ धर्मों के सेवन व वर्धनकर्ता के अर्थ में**

यस्मा च एस दिब्बब्रह्मअरियविहारे कायचित्त-उपधिविवेके सुञ्ञतप्पणिहितानिमित्तविमो-क्खे अञ्ञे च लोकियलोकुत्तरे उत्तरिमनुस्सधम्मे भजि सेवि बहुलं अकासि, तस्मा भत्तवा ति वत्तब्बे **भगवा** ति वुच्चति ( विसु० 459 )

**( छ ) भवकारक तृष्णा-क्षय के अर्थ में**

यस्मा पन तीसु भवेसु तण्हासङ्खातं गमनं अनेन वन्तं, तस्मा भवेसु वन्तगमनो ति वत्तब्बे भव सद्दतो भ–कारं गमनसद्दतो ग–कारं वन्तसद्दतो व-कारं च दीघं कत्वा आदाय **भगवा** ति वुच्चति, यथा लोके मेहनस्स खस्स माला ति वत्तब्बे 'मेखला' ति । ( विसु० 459 )

**५—क्लेशभग्नता तथा उत्तम धर्मों के सेवन के अर्थ में**

**भगवा** ति गारवाधिवचनं । अपि च भग्गरागो ति **भगवा,** भग्गदोसो०, भग्गमोहो०, भग्ग-मानो०, भग्गदिट्ठि०, भग्गतण्हो० ( भग्गकण्डको० ) भग्गकिलेसो ति **भगवा,**

भजि विभजि पविभजि धम्मरतनं ति **भगवा**, भवानं अन्तकरो ति **भगवा**, भावितकायो भावितसीलो भावितचित्तो भावितपञ्ञो ति **भगवा**, भजि वा **भगवा** अरञ्ञवनपत्थानि पन्तानि सेनासनानि अप्पसद्दानि अप्पनिग्घोसानि विजनवातानि मनुस्सराहस्सेय्यकानि पटिसल्लानसारुप्पानी ति **भगवा**, भागी वा **भगवा** चीवरपिण्डपातसेनासनगिलानपच्चय-भेसज्जपरिक्खरानं ति **भगवा**, भागी वा भगवा अत्थरसस्स धम्मरसस्स विमुत्तिरसस्स अधिसीलरस अधिचित्तस्स अधिपञ्ञाया ति **भगवा**, भागी वा **भगवा** चतुन्नं झानानं चतुन्नं अप्पमञ्ञानं चतुन्नं अरूपसमापत्तीनं ति **भगवा**, भागी वा भगवा अट्ठन्नं विमोक्खानं अट्ठन्नं अभिभायतनानं नवन्नं अनुपुब्बविहारसमापत्तीनं ति **भगवा**, भागी वा भगवा दसन्नं सञ्ञाभावनानं दसन्न कसिणसमापत्तीनं आनापानस्सतिसमाधिस्स असुभसमापत्तिया ति भगवा, भागी व भगवा ति चतुन्नं सतिपट्ठानानं चतुन्नं सम्मप्पधानानं चतुन्नं इद्धिपादानं पञ्चन्नं इन्द्रियानं पञ्चन्नं बलानं सत्तन्नं बोज्झङ्गानं अरियस्स अट्ठङ्गिकस्स मग्गस्सा ति **भगवा**, भागी वा भगवा दसन्नं तथागतबलानं चतुन्नं वेसारज्जं चतुन्नं पटिसम्भिदानं छन्नं अभिञ्ञानं छन्नं बुद्धधम्मानं ति **भगवा**। **भगवा** ति नेतं नाम मातरा कतं....पे०.... यदिदं भगवा' ति। ( चू० नि०, पृ० 27-28; म० निद्देस, पृ० 119-120, 176-177, 286-287, 292-293 )

## सन्दर्भ ग्रन्थ व संकेत


( 1 ) अर्थविनिश्चयसूत्र निबन्धन~अ० सू० नि०; साम्तानी, एन० एच०; पटना, 1971

( 2 ) अष्टसाहस्रिका प्रज्ञापारमिता~अ० प्र०; वैद्य, पी० एल०, दरभंगा, 1960 ( अभिसमयालंकारालोक टीका )

( 3 ) चूलनिद्देस~चू० नि०; काश्यप, भिक्षु जगदीश; नालन्दा; 1959

( 4 ) बोधिचर्यावतार~बो० च०; वैद्य, पी० एल० दरभंगा; 1960

( 5 ) महानिद्देस~म० निद्देस; काश्यप, भिक्षु जगदीश; नालन्दा, 1960

( 6 ) विसुद्धिमग्ग~विसु०; भिक्षु रेवत धम्म; वाराणसी, 1969

( 7 ) सुमङ्गलविलासिनी~सुम०; तिवारी, महेश; नालन्दा, 1974


---

